महाकविभानुदत्तमिश्रविरचिता

# रसमञ्जरी

कविशेखरपण्डितश्रीबदरीनाथशर्मणा निर्मितया

सुरभिसमाख्यया व्याख्यया विभूषिता

तथा

पण्डितजगन्नाथपाठकनिर्मितया स्वतन्त्रया सुषमाख्य-

विस्तृतहिन्दीव्याख्यया विभूषिता

तेनैव सम्पादिता च

( सम्मिलितं संस्करणम् )

मूल्यं ५)

श्रीहरिकृष्णनिबन्धमणिमालायाः
चतुर्थो (४) मणिः।



महाकविभानुदत्तमिश्रविरचिता

# रसमञ्जरी



मुजफ्फरपुरस्थसार्वभौमसंस्कृतमहाविद्यालयप्रधानाध्यापकेन
साहित्याचार्यव्याकरणकाव्यतीर्थ-
कविशेखर पण्डित श्रीबदरीनाथशर्म-
निर्मित 'सुरभि'व्याख्याविभूषिता
नेने इत्युपाह्वेन पं० श्री गोपालशास्त्रिणा परिष्कृता।



प्रकाशकः—
श्रीहरिकृष्णनिबन्धभवनम्, बनारस-१

संवत् २००८] द्वितीयं संस्करणम्। [सन् १९५१

# प्रस्तावना

विदितमस्तु तत्र भवतां रसिकजनानाम्—

यदियं रसमञ्जरी भानुदत्तकविकृता मित्रवर श्री पं० बदरीनाथशर्मणा सुरभिव्याख्यया समलङ्कृता भवतां पुरस्तादुपढौक्यते। रसमञ्जरी तत्प्रणेतृपरिचयो व्याख्याकर्त्रा भूमिकायां सर्वात्मनोल्लिखित इति न तत्राऽस्माकं किञ्चिदवशिष्यते।

सन्ति नाम तत्रानेका व्याख्या व्यङ्ग्यार्थकौमुद्यादयस्तथापीयं 'सुरभि' व्याख्या सर्वा अतिशेते। यत इयं विद्यार्थिजनोपादेया यथा भवति तथा व्याख्याकर्त्राऽऽयासितं महता प्रयत्नेन। तथाहि—अस्यां खलु रसमञ्जरीस्थगद्यपद्यानां पदशः सरलं व्याख्यानं, दुर्ज्ञेयपदकोशाः, प्रतिश्लोकमलङ्काराः, सलक्षणानि छन्दांसि च संगृहीतानि वर्तन्ते। रसमञ्जरीगतोदाहरणश्लोकगतविशेषपदव्यङ्ग्यार्थास्तु अत्र प्राधान्येन संगृहीता इत्ययं महान् विशेषः। सर्वथेयं विद्यार्थिजनोपकारिणीति नात्र कश्चन संशयलवः।

एतन्मुद्रणं किल पूर्वमन्यस्य कस्यचित्संपादकत्वे प्रारब्धमासीत्। किन्तु तेन श्रेष्ठी श्रीहरिकृष्णदासोऽपरितुष्यन् मत्सविधे आगत्य प्रार्थितवानेतस्याः संपादनाय। अनेककार्याकुलचेता अहमनवकाशोऽपि तदीयप्राचीनसम्बन्धजस्नेहपरिप्लुतो नाशकं प्रत्याख्यातुम्। किन्तु तत्र तत्र मुद्रापणार्थमावश्यकपरिष्कारमात्रकरणं स्वीकृत्य पुस्तकस्यास्य मुद्रणं समपाद्यमत्र दृष्टिदोषेण सीसकाक्षरयोजकदोषेण च गलितानि स्खलितानि यथासम्भवं परिमार्ज्य पुस्तकसंग्रहेण तदीयाध्ययनाध्यापनप्रचारेण प्रोत्साहयिष्यन्ति प्रकाशकमहोदयं व्याख्याकारं च तत्र भवन्तः श्रीमन्तो गुणैकपक्षपातिनो विद्वांस इति आशासे—

विदुषामनुचरो

**गोपाल शास्त्री**

# भूमिका

अये ! साहित्यहृदयस्पृशः सहृदयशिरोमणयो विपश्चितः !

को नाम रसिकजनेष्वात्मानं जिगणयिषन् मनीषी गुणगौरवेण मञ्जुतरं रसमञ्जरीसमभिधान रसनिबन्धं नाधिगच्छति । यस्मिन् सपरिकरालम्बनविभावसात्त्विकभावनिरूपणमुखेन स्वरचितरुचिरोदाहरणैः सावयवः शृङ्गाररसः सविशेषं निरूपितः । तथापि सारल्यमस्य सुतरां प्रशंसनीयमेवेति न परोक्षं प्रेक्षकाणाम् । इह्त्या उदाहरणश्लोकाश्शब्दार्थचारिमसंपदा सकलानेव सदृशानतिशेरत इति द्रढयति साहित्यसन्दर्भेषु तेषां सादरसमुल्लेखः ।

इत्थञ्च ग्रन्थोऽयं सर्वथा स्वविषयेऽप्रतिम एवेति व्याहरन्तो न मनागपि जिह्नीमः ।

रचयिता चास्य श्रीजानकीजनिजागरूकयशोभासुरमिथिलामहीमण्डलान्तर्गत-(१) विद्यातपोवैभवविश्रुत-श्री (२) सिद्धेश्वराधिष्ठित-'सरिसव' नामग्राममधिवसतो मैथिलश्रोत्रियाग्रजन्मसोदरपुरसरिसववंशावतंस-महामहोपाध्यायशङ्करमिश्रानुजमहादेव (३) मिश्रात्मजनुषो ढका (४) कत्रिविरुदविभूषितस्य महामोदादीनां प्रणेतुः कविचक्रचूडामणेर्गणेश्वरापराभिधानस्य गणपतिमिश्रस्य तनुजः खैष्टषोडशशताब्द्यां विद्यमानः सकलालङ्कारिकशेखरस्तत्रभवान् भानुदत्तमिश्रः ।

शेषचिन्तामणि-गोपालाचार्य-रङ्गशायिनाम् मूलकृन्नामनि, भानुदत्तो भानुकरो वेतिसंशयस्तु मैथिलद्विजराजपञ्जीनिबन्धानवबोधनिबन्धनः । एवं दाक्षिणात्यव्याख्यातृसाहचर्येण भट्टोपाधिकल्पनमपीदमन्ववाया-परिचयमूलकमेव । जह्लणेनोल्लिखितः खैष्टत्रयोदशशताब्दीसमुद्भूतो वैद्यभानुपण्डितः, गोविन्देन सभ्यालङ्करणे परिगृहीतो भानुकरश्चास्मात्पृथगेव, समयविशेषणवैलक्षण्यात् ।

(१) तदुक्तं भृङ्गदूते—

'मीमांसायाः श्रवणसरसा शेमुषी तावकी चेत् ? चित्ते चेत्ते किमपि कविताकर्णने कौतुकं वा । भ्राम्यन् (?) बुधजनचतुष्पाठिकासु प्रयत्ना विद्याशालिप्रियसरिसवग्रामरत्नं परीयाः' ॥

(२) श्रीसिद्धेश्वरी देवी, श्रीसिद्धेश्वरश्च शिवा द्वापरान्ते श्रीबलभद्रेण प्रतिष्ठापिता-वद्यत्वेऽप्यत्र विलसतः । (३) इदमखिलं लिखितवंशवृक्षं वीक्ष्य स्फुटमवगन्तव्यम् ।

(४) मैथिलपञ्जीप्रसिद्धोऽयमुपाधिः । काव्यपाण्डित्यप्रकर्षः पुनरस्य रसतरङ्गिण्यामुदाहृताः कतिपय श्लोकाः प्रकाशयन्ति ।

भानुमिश्रखानित 'भानुमती' नामपुष्करिण्याः सांप्रतमुपम्भलाद् 'इसह' पुराख्यग्राममेव तन्निवासस्थानं निश्चिन्वतस्तीरभुक्तीतिहास—(हिष्ट्री ऑफ् तिरहुत) लेखकस्यामैथिलतासमुचितो विभ्रमः, तत्पूर्वापरपुरुषाणां तत्र स्थितेरप्रसिद्धेः, 'इसह' पुरस्य सरिसवग्रामातिसन्निकर्षेणापि तत्र पुष्करिणीखाननसंभवाच्च ।

भानुदत्तमिश्र—महाकविभवभूतिसंमिलनेतिवृत्तं पुनरैतिह्यमात्रमूलकमाकलयन्तो नात्र लिखामः ।

भानुकविना प्रकृतग्रन्थान्ते—

'तातो यस्य गणेश्वरः कविकुलालङ्कारचूडामणि-
र्देशो यस्य विदेहभूः सुरसरित्कल्लोलकिर्मीरिता ।'

इत्यनेन स्वाभिजनो मिथिलादेशः, स्वजनकश्च गणेश्वरः प्रत्यपादि ।

परैः पुनर्गणनाथस्तथाऽभ्यधायि ।

पञ्जीप्रबन्धेन तु गणपतिरेव तथा निरदेशीतिविविधविप्रतिपत्तिबीजकविचिकित्साप्रसूतौ पञ्जीनिबन्धलेख एव मैथिलेषु सर्वतः प्रमाणमितिमन्यमानाः कुमारभार्गवीये स्वयङ्कविकृतवंशवर्णनमनुसन्दधाना ऑफ्रेट् महाशयसंमतिं चाददाना नामयुगान्तरकल्पनाच्छन्दोऽनुरोधेनार्थैक्यमाश्रित्यैवेति निर्णयामः ।

यद्यपि कविनाऽनेन स्वसमयः क्वापि नोपन्यस्तः । तथापि म० म० शङ्करमिश्रस्य समयादवसातुं शक्यते । स च १४८८ खैष्टाब्दे मिथिलामभूषयदिति नेपालराजपुस्तकालयस्थग्रन्थलेखात्, तस्माद्दशमानां तद्वंश्यानामिदानीं सद्भावाच्चावधारितम् । एवञ्च पञ्चदशशताब्द्या अवसाने वर्तमानस्य तस्य भ्रातुः पौत्रो भानुमिश्रः षोडशशताब्द्यामवर्ततेति नासंभाव्यम् ।

किञ्च भानुकवेः पौत्र्याः पुत्रो भृङ्गदूतस्य निर्माता गङ्गानन्दकविः कर्णभूषणे स्वसंरक्षकं बीकानेरनरेश कर्णसिंहमवर्णयत् । महाराजकर्णसिंहः खैष्टसप्तदशशताब्द्यामासीदिति (क्रौनोलौजी ऑफ इण्डिया) भारतेतिहासपद्धतौ सी एम डफ् महानुभावेन लिखितम् । इत्थं किल सप्तदशशताब्द्यां विद्यमानस्य गङ्गानन्दकवेः प्रमातामहः कविभानुदत्तः षोडशशताब्द्यामविद्यतेति नाद्भुतम् । एतेन भानुदत्तस्त्रयोदशशताब्द्या उत्तरार्धेऽभूदिति तीरभुक्तीतिहासप्रणेतुर्लेखो निर्मूल एव ।

रसमञ्जरी-रसतरङ्गिणी-रसपारिजात-गीतगौरीपति-कुमारभार्गवीया-लंकारतिलक-मुहूर्तसार-शृङ्गारदीपिकाप्रभृतयः प्रभूता भानुकविप्रणीताः प्रबन्धाः श्रूयन्ते। किन्तु हन्त ते नैवाद्यत्वे साकल्येनोपलभ्यन्ते। 'तत्र नायकयोरवस्थाभेदेन बहवो भेदाः, ते रसमञ्जर्यां विशेषतो दर्शिताः' इति रसतरङ्गिण्यां दर्शनात्ततो रसमञ्जर्या ज्यायस्त्वमवधारयामः।

कविरसौ निजामोपनामभूमिभृतं देवगिरीश्वरमुपाजीवदिति सात्त्विकभावसमासोदाहरणे—

'तत्कि राजपथे निजामधरणीपालोऽयमालोकितः'

इति रसमञ्जरीश्लोकांशः सूचयति।

प्रणेतुः पुण्यप्रकर्षेण रसमञ्जर्या मनोरमतमत्वेन च नातिचिरादेव तावान् प्रचारः समजनि। येनेयं नानाविषयवासिभिर्मनीषिशेखरैरुच्चावचाभिर्व्याख्याभिरहमहमिकया सदक्रियत। तासु च १-अनन्तपण्डितस्य व्यङ्ग्यार्थकौमुदी, २-नागेशभट्टस्य प्रकाशः, ३-शेषचिन्तामणेः परिमलः, ४-गोपालाचार्यस्य विकासः, ५-द्राविडगोपालभट्टस्य रसिकरञ्जिनी, ६-विश्वेश्वरपार्वतीयस्य समञ्जसा, ७-रंगशायिन आमोदः ८-आनन्दशर्मणो व्यङ्ग्यार्थदीपिका, ९-महादेवस्य भानुभावप्रकाशः, १०-व्रजराजस्य रसिकरञ्जनम्, ११-कस्यचित् रसमञ्जरीस्थूलतातपर्यार्थ इत्येकादशैव वयमाकर्णयामः।

तदेतस्याः राजकीयकाशी-विहारोत्कलप्रान्तीय-संस्कृतसाहित्याचार्यपरीक्षापाठ्यतया निर्धारितायाः प्रौढविद्वन्मनोहराऽपि च्छात्रोपयोगिनी काऽपि विवृतिरावश्यकीति विभावयता वाराणसेयसंस्कृतनिबन्धभवनाध्यक्षेण संस्कृतग्रन्थोद्धाराय नितरां बद्धपरिकरेण श्रेष्ठिना श्रीहरिकृष्णदासेन समुत्साहितः कविभानुदत्तवंशकरीरभूतः सरिसवग्रामेवासी झोपाभिधश्रोत्रियप्रवरमहामहिमविद्यानाथशर्मणस्तनुजन्मा श्रीबदरीनाथशर्मा द्वादशीभरयाः सुरभिसमाख्यां व्याख्यामलिखत्। सा चेयं काश्यामुक्तश्रेष्ठिप्रबन्धेन मुद्रिता सतीष्वपि परासु विवृतिषु सारल्यसारदर्शिताभ्यां कमपि परीक्षार्थिनामुपकारं विदध्यादित्याशासानो व्याख्यामुद्रणप्रमादजत्रुटिक्षमां प्रार्थयते—

| | |
|---|---|
| सं० कालेज—मुजफ्फरपुरम् | विपश्चितामनुचरो |
| ३-७-१९२७ | बदरीनाथः |

# कवि-व्याख्यातृवंशवृक्षः



श्रीराधाकृष्णाभ्यां नमः

# रसमञ्जरी

## 'सुरभि' समाख्यया व्याख्यया विभूषिता ।

काञ्चन काञ्चनवर्ल्ली चटुलतमालाश्रितां कलयन् ।
प्रथयति 'बदरीनाथः' सुकृती रसमञ्जरीसुरभिम् ॥ १ ॥

इह कविसहृदयास्तिकशिरोमणिः श्रीमान् भानुमिश्रः समुचितमन्तरायशान्तये शिवात्मकं मङ्गलं वस्तु निर्दिशति—

आत्मीयं चरणं दधाति पुरतो निम्नोन्नतायां भुवि
स्वीयेनैव करेण कर्षति तरोः पुष्पं श्रमाशङ्कया ।
तल्पे किञ्च मृगत्वचा विरचिते निद्राति भागैर्निजै-
रन्तः प्रेमभरालसां प्रियतमामङ्के दधानो हरः ॥ १ ॥

अन्तर्हृदये, प्रेमभरेण स्नेहातिशयेन, अलसां स्तिमिताम्, प्रियतमां प्रेमसीम (उमाम्), अङ्के (वामेऽवयवे) दधानो धारयन् हर उमापतिः, श्रमस्य (प्रेयस्याः खेदस्य) आ लेशतः, शङ्कया, निम्नोन्नतायां नीचोच्चायाम्, भुवि, आत्मीयं निजम् (वामेतरम्) चरणम्-पुरतोऽग्रे, दधात्यारोपयति । किञ्च तरोः (न तु लतायाः) पुष्पम् (न तु पुष्पाणि फलं वा) स्वीयेनात्मीयेन एव, न तु वामेन करेण, कर्षति त्रोटयते । (तथा) मृगत्वचा (हरिणचर्म्मणा) विरचिते (सुसज्जिते) तल्पे (शयनीये) निजैः स्वीयैः (दक्षिणैः) भागैरंशैः (अवयवैः) निद्राति स्वपितीत्यर्थः ।

तथा च—'पुरतोऽग्रतः' 'अङ्कः प्रतीकोऽवयवः' इत्यमरः, 'तल्पं च शयनीये' इति विश्वः, 'हरः पशुप्रमथभूतोमापतिः' इति हैमः, 'खेदो

रत्यध्वगत्यादेः श्वासनिद्रादिकृच्छ्रमः' इति दर्पणः, किमनिष्टं भविष्यतीत्याकारकश्चित्तवृत्तिविशेषः शङ्का, स्त्रीपुंसयोरन्योन्यालम्बनः प्रेमाख्यश्चित्तवृत्तिविशेषो रतिः, 'अतितृप्त्यादिजन्या चेतसः क्रियानुन्मुखता ऽऽलस्यम्, श्रमादिप्रयोज्यचेतस्सम्मीलनं निद्रा, इति जगन्नाथश्च। अत्रोमाया मृदुतां सूचयता वाक्यार्थत्रयेण, आत्मीयादिपद्द्योत्यप्रियत्वेन च शिवस्य तस्यां प्रेमातिशयः, अन्तरादिपदव्यञ्जितेन तस्याः सान्द्रानन्दजनितबाह्यमेयवैमुख्येन प्रेम्णः परस्परनिरूपितत्वान्मनोरमत्वम्, नपुंसकलिङ्गेन स्वाङ्गस्य कोमलता, तया तदङ्गानाम्, ततश्च प्रेमोत्कर्षः, एकवचनेनैकाङ्ग एव चिरं वहनेऽपि खेदानवगमाभावात्तन्निमग्नमनस्कता, ततस्तस्याः सुषमाऽतिरेकः, भुवो निम्नोन्नतत्वेन पुष्पस्य तरुस्थतया तल्पस्य मृगचर्ममयत्वेन च श्रमजननयोग्यत्वम्, वर्णनायविषयश्च वस्तु संलक्ष्यक्रमम्, तदनुप्राणितः कविवृत्तितद्विषयकरतिभावः, शिवयोविलक्षणोपगूहनोम्भितो भावानुप्राणकः स्वतन्त्रो वा शृङ्गाररसश्चासंलक्ष्यक्रमो वाच्यातिशायिविच्छित्त्या ध्वन्यते।

यत्तज्जयति पदानामध्याहारेण नतिध्वनिपक्षस्तु नानध्याहारभारगौरवान्न विचारसहः। न चापि मङ्गलत्वहानिः यथाश्रुतेऽपि— 'आशीर्नमस्क्रिया वस्तुनिर्देशो वाऽपि तन्मुखम्' इति दर्शनाद्वस्तुनिर्देशात्मकमङ्गलत्वस्य सत्त्वात्। एवं 'रसालसाम्' इत्यस्य स्थानेऽर्थकरसशब्दघटितपाठो न सम्यक्, रसस्य स्वशब्दवाच्यत्वापत्तेः, अर्थान्तरकल्पनेऽसङ्गतेः, तत्पविन्यायकान्तरसद्भावाच्च। श्रमाशङ्कानिद्रालस्यानां सञ्चारिणां तु वाच्यत्वेऽपि, प्रकृतरसाप्रातिकूल्यात, प्रकारान्तरस्य तत्कार्यानिर्वाहकत्वाच्च 'औत्सुक्येन कृतत्वरा' इत्यादिवन्न दोषः। तदुक्तम्—'न दोषः स्वपदेनोक्तावपि सञ्चारिणः क्वचित्' इति मम्मटेन।

श्रमाशङ्कायाः करणतया क्रियात्रयेऽन्वयः। अत्रगमनार्थकगुरधातोः कर्मकान्तात्तसौ पुरत इति। उमाशिववामाङ्गयोरभेदेऽप्याधाराधेयभावारोपादङ्ग इत्यत्र सप्तमी।

तादृशचरणारोपणादिव्यापारकारणीभूतस्य तथाविधप्रेयसीधारणस्यानेकपदार्थतया 'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गम्' इति दर्पणोक्तलक्षणं काव्यलिङ्गम्। शृङ्गाररसस्य भावाङ्गत्वविवक्षायां रसवदलङ्कारश्च।

वस्तुतस्तु—'काव्यात्मत्वं रसध्वनेरेव' इति लोचनकृताऽपि काव्यात्मतया व्यवस्थापितस्य तस्यात्मन इवाप्राधान्यमसम्भवीति नेह सः। तस्याविवक्षायां सत्त्वे तु तदलङ्कारो ध्वनिकृत्सम्मत इति बोध्यम्।

स्वीया मध्या धीरा नायिका। अनुकूलो नायकः। 'समग्रगुणा वैदर्भी' इति वामनोक्ता वैदर्भी रीतिः। 'अवर्णात्सम्पत्तिः' इति भामहस्य, 'मो भूमिः श्रियमातनोति' इति कालिदासस्य च वचनात् प्रथममवर्णमगणयोः सन्निवेशः सम्पत्तिफलकः। 'सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्' इति रत्नाकरोक्तलक्षणं शार्दूलविक्रीडितं छन्दश्च ॥१॥

कीर्त्यनुवृत्तये स्वग्रन्थनाम्नो निर्दिशन् प्रेक्षावत्प्रवृत्त्यौपयिकं प्रयोजनं दर्शयति—

विद्वत्कुलमनोभृङ्गरसव्यासङ्गहेतवे।
एषा प्रकाश्यते श्रीमद्भानुना रसमञ्जरी ॥ २ ॥

विदुषां सहृदयानाम्, कुलस्य समुदयस्य, मनः (एव) भृङ्गः (तस्य यः) रसस्य शृङ्गारस्य मकरन्दस्य च, व्यासङ्गो विलक्षणप्राप्तिः (आस्वादः) (स एव) हेतुः प्रबन्धरचनाया मञ्जरीविवृतेश्च कारणम्, तस्मै (प्रयोजनाय) एषा बुद्धिस्था, रसस्य प्रागुपात्तस्य, (आधारभूता प्रकाशिका च) मञ्जरी नवप्रसूनोद्भेदस्तत्सदृशो ग्रन्थश्च, श्रीमता प्रभावता प्रतिभाभृता च, भानुना विवस्वता भानुकविना च प्रकाश्यते विकाश्यते विरच्यते चेत्यर्थः। तथा च—'कुलं गणे' इति विश्वः। 'रसो गन्धरसे जले। शृङ्गारादौ' इति मेदिनी। 'मञ्जरी वल्लरी' इत्यमरश्च।

अत्र विद्वत्पदेन व्यवच्छिन्नानां वैधेयानामिहादराभावेऽपि खेदाभावः, मनसो भृङ्गत्वारोपाद्रसासक्तिः, यथा सूर्यो मधुलिहां मकरन्दास्वादाय मञ्जरीं विकाशयति, एवं कविः सचेतसां रसास्वादाय प्रबन्धमिमं विरचयतीत्युपमा च व्यज्यते। न चाप्रसिद्धिः, चूतादिमञ्जर्याः कुसुमरूपतया रविविकास्यत्वस्य सर्ववेद्यत्वात्। निमित्तपर्यायत्वाद्धेतुशब्दाच्चतुर्थी। आस्वादजनकत्वसाधर्म्येण 'एषा रसमञ्जरी' इत्यत्र रसमञ्जरीपदस्यानुयोगिताऽवच्छेदकग्रन्थत्वापुरस्का-

रेण बोधकत्वाद् ग्रन्थे साध्यवसाना गौणलक्षणा । तस्यामास्वादातिशयजनकत्वं व्यङ्ग्यं प्रयोजनम् ।

मनसो भृङ्गतादात्म्यारोपाद् 'विषय्यभेदताद्रूप्यरञ्जनं विषयस्य यत् । रूपकं तत्' इति जयदेवोक्तलक्षणं रूपकम् । श्लेषस्तु नास्त्येव, तत्रार्थयोः समकक्षत्वस्य रुय्यकादिभिर्व्यवस्थापितत्वात् । इह तु—'अर्थः प्रकरणं लिङ्गम्' इत्यादिदर्शनात्प्रकरणेन बलाद्रसभान्वादिपदानामभिधायां शृङ्गारकविप्रभृतिषु नियन्त्रितायां मकरन्दसूर्यादीनामुपस्थितिः पश्चादभिधामूलव्यञ्जनयैवेति न साम्यम् । एवं पूर्वार्धार्थस्य परार्धार्थहेतुत्वात्काव्यलिङ्गमपि न, हेतुपदोपादानाद्विच्छित्तिविशेषोच्छेदादिति प्रदीपोद्द्योते स्फुटम् । 'सोऽनेकस्य सकृत्पूर्वः' इति प्रकाशलक्षितोऽङ्गशब्दयोश्छेकः, समानस्थानीयवर्णानां सह विन्यासेन श्रुत्यनुप्रासश्च, तेषां संसृष्टिरेत्र मिथो नैरपेक्ष्यादलंकारः । पद्यं छन्दश्च ॥ २ ॥

प्रकृतमाह—

तत्र रसेषु शृङ्गारस्याभ्यर्हितत्वेन तदालम्बनविभावत्वेन नायिका तावन्निरूप्यते—

तत्र ग्रन्थे, रसेषु रत्यादिस्थायिभावावच्छिन्नचित्स्वरूपेषु 'शृङ्गारः करुणः शान्तो रौद्रो वीरोऽद्भुतस्तथा । हास्यो भयानकश्चैव बीभत्सश्चेति ते नव' इति भरतोक्तनवविधेषु, शृङ्गारस्य रतिस्थायिकस्य, अभ्यर्हितत्वेन शृङ्गारमुपक्रम्य 'अस्यास्ति दैवतं विष्णुः' इति कौस्तुभोक्तेः श्रेष्ठतया, तस्य बुद्धिविषयीभूतनायकवृत्तिरसस्य, आलम्बनविभावत्वेन स्थायिविषयत्वविशिष्टरसास्वादजनकत्वेन (अवच्छिन्ना, हेतुना वा) नायिकाऽप्रामाण्यनिश्चयानास्कन्दितानन्यात्वप्रकारकज्ञानाविशेष्यत्वविशिष्टकान्तात्वोपाधिमती, तावन्नायकनिरूपणात्पूर्वम्, निरूप्यते उद्दिश्य लक्षयित्वा परीक्ष्यत इत्यर्थः । एतेन शृङ्गारालम्बनत्वेन तौल्ये प्रथमं नायिकानिरूपणे किं बीजम्, स्वन्तनायिकापदाच्च कथं सर्वासां नायिकानां बोध इति शङ्कायुगलमपास्तम् ।

स्वरूपज्ञानायोद्दिशन् विभजते—

सा च त्रिविधा—स्वीया, परकीया, सामान्या चेति ।

सा नायिका, त्रिविधा स्वीयात्वाद्युपाधित्रयविशिष्टा ।

इतरव्यावृत्तये स्वीयां लक्षयति—

तत्र स्वामिन्येवानुरक्ता स्वीया ।

तत्र त्रिविधनायिकासु स्वामिनि, परिणेतरि एव न तु तद्‌तिरिक्ते अनुरक्ता स्वीयेत्यर्थः । स्वामी परिणेता न तु परिणीतः, तस्य परिणयकर्म्मत्वाभावात् । शृङ्गारस्थायिरतिरनुरागः, तेन पित्रादिरतिसत्त्वेऽपि न क्षतिः । तद्वत्ता च तदधिकरणताऽवच्छेदक-( नायिकात्व- ) धर्म्मवत्त्वम्, तेन मुग्धायामनुरागाभावेऽपि तद्धर्म्मसत्त्वान्नाव्याप्तिः । तथा च परिणेतृविषयकरत्यधिकरणताऽवच्छेदकधर्म्मवत्त्वे सति तदितराननुरक्तत्वं स्वीयात्वं पर्य्यवसितम् ।

दोषपरिजिहीर्षया परीक्षते—

न च परिणीतायां परगामिन्यामव्याप्तिः, अत्र पतिव्रताया एव लक्ष्यत्वात् ।

परगामिन्यां पत्यतिरिक्तानुरक्तायाम्, विशेष्यदलासमन्वयाद्व्याप्तिर्लक्ष्यताऽवच्छेदकसमानाधिकरणात्यन्ताभावप्रतियोगित्वं तु न, अत्र स्वीयाप्रकरणे, पतिव्रतायाः पत्येकानुरक्ताया एव न तु पतितदन्ययोरनुरक्ताया लक्ष्यत्वाल्लक्षयितुमुद्देश्यत्वात् । इह स्वीयानिष्कृष्टलक्षणमज्ञात्वाऽव्याप्तिः शङ्कितेति बोध्यम् । तदुक्तं दर्पणे—'विनयार्जवादियुक्ता गृहकर्म्मपरा पतिव्रता स्वीया' इति ।

उभयानुरक्ताया गतिमाह—

तस्याश्च परगामित्वात् परकीयात्वमपि समायाति ।

तस्या उभयानुरक्तायास्तु परानुरक्तत्वात् परकीयात्वं वक्ष्यमाणं परकीयालक्षणमेव । चकारो व्यवच्छेदे, अपिरवधारणे ।

'स्वीयाऽऽर्जवादियुक्' इति धनञ्जयोक्तांस्तद्धर्म्मान्दर्शयति—

अस्याश्चेष्टा—भर्तुः शुश्रूषा शीलसंरक्षणमार्जवं क्षमा चेति ।

भर्तुः पत्युः शुश्रूषा परिचर्य्या, शीलस्य सद्वृत्तस्य सम्यग् रक्षणं

मनसाऽप्यनन्यथाकरणम्, आर्जवमकौटिल्यम्, क्षमा तद्दोषतितिक्षेति चतुष्टयम्, अस्याः स्वीयायाश्चेष्टा ज्ञापको धर्म इत्यर्थः। तथा च-'शुश्रूषा श्रोतुमिच्छायां परिचर्य्या प्रदानयोः' 'शीलं स्वभावे सद्वृत्ते' इति विश्वप्रकाशः। मूले चेष्टापदं धर्म्मपरम्, अन्यथाऽऽर्जवेऽसङ्गतिः स्यात्।

स्वीयाधर्म्मानुदाहरति—

यथा—

गतागतकुतूहलं नयनयोरपाङ्गावधि
स्मितं कुलनतभ्रुवामधर एव विश्राम्यति।
वचः प्रियतमश्रुतेरतिथिरेव कोपक्रमः
कदाचिदपि चेत्तदा मनसि केवलं मज्जति॥ ३॥

कुलनतभ्रुवां कुलीनाङ्गनानां नयनयोर्गतागतकुतूहलं प्रसारणाकुञ्चनकौतुकम्, अपाङ्गौ नेत्रप्रान्ताववधिः परिच्छेत्ता (सीमा) यस्य तादृशम्, न तु बहिः, यद्वाऽपगतमङ्गं यस्येत्यपाङ्गोऽनङ्गस्तदवधि, कान्तस्वान्ते तदुदयं यावत्, न तु ततः परम्, तदपि कदाचित् कामोद्रेकिणि वसन्तादिसमये, न तु सर्वदा भवतीति शेषः। (एवं) स्मितं नेत्रमात्रविकासको हासः, नत्वतिहसितादि, अधरेऽनूर्ध्वोष्ठ एव, न तु स्वक्कादौ, विश्राम्यति विरमति। (तथा) वचो (वचनं) प्रियतमस्य, न तु परेषाम्, श्रुतेरेकस्यैव श्रवणस्य, न तु द्वयोरतिथिरागन्तुको भवतीति शेषः। (किञ्च) कदाचित् प्रतीपाङ्गनासङ्गमसाक्षात्कारावसरे, चेद् (यदि) कोपस्य मानस्य क्रमः प्रारम्भः, अपि सम्भाव्यते, तदा केवलं निश्चितं कृत्स्नं वा मनसि मज्जति निलीयत इत्यर्थः।

तथा च 'अपाङ्गोऽप्यङ्गहीने स्यान्नेत्रान्ते' इति विश्वः। 'श्रुतौ श्रवः' इति हेमचन्द्रः। 'परिच्छेदे बिलेऽवधिः' 'आगन्तुरतिथिः' निर्णीते केवलमिति त्रिलिङ्गं त्वेककृत्स्नयोः' इत्यमरसिंहः। 'ईषद्विकसितैर्गण्डैः कटाक्षैः सौष्ठवान्वितैः। अलक्षितद्विजं धीरमुत्तमानां स्मितं भवेत्' इति भरतश्च। इह कदाचिदिति पुरस्तात् कुलनतभ्रुवामिति पुरस्तादप्यन्वेति। कुलनतभ्रूपदेन शालीनता, विश्राम्यतिपदेन

वाच्यं तिरस्कृत्य बहिरनुद्गतिस्तत्र सुखावस्थितिश्च, श्रुतेरित्येकवचनेनोक्तेरनुच्चैस्त्वम्, एतावद्भिः शीलसंरक्षणम्, प्रियतमपदेनालपनयोग्यता, अतिथिपदेन कादाचित्कत्वं मानापमानयोस्तुल्यता च, तेन प्रियापराधानां क्षमा, क्रमपदेन दोषस्यापरिपोषः, तस्मादार्जवम्, मज्जतिपदेन वहिरनवेष्टानुन्मीलनं मनसो गाम्भीर्यञ्च, कदाचित्पदेन तद्व्यापाराणामनित्यत्वं, नित्यत्वे प्रियपरिचर्य्याव्यासङ्गभङ्गाद्भीतिः, तावता पतिशुश्रूषा च व्यज्यते।

अङ्गनामात्रवृत्तीनां तादृशनयनव्यापारादीनां वर्णनात् 'स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम्' इति मम्मटोक्ता स्वभावोक्तिः परिकरश्चालङ्कारौ। 'जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः' इति केदारोक्तलक्षणं पृथ्वाच्छन्दश्च ॥ ३ ॥

स्वीयां विभजते—

स्वीया तु त्रिविधा—मुग्धा, मध्या, प्रगल्भा चेति।

तुना परकीयासामान्ये व्यवच्छिद्येते, समुच्चयप्रकारयोश्चेतिशब्दौ।

मुग्धां लक्षयति—

तत्राङ्कुरितयौवना मुग्धा।

तत्र त्रिविधस्वीयासु, अङ्कुरणस्य चेतनावयवे बाधाच्छोभातिशयव्यञ्जनाय नवीनत्वं लक्ष्यते। तथा च पत्यतिरिक्ताननुरक्तत्वे सति-नवीनयौवनशालित्वं मुग्धाया लक्षणम्, नवीनयौवनयोः परकीयासामान्ययोर्व्यावृत्तये पूर्वदलम्, मध्याप्रगल्भयोर्व्यवच्छेदाय चोत्तरदलम्। वस्तुतस्तु परकीयासामान्ययोरपि क्वचिन्मुग्धात्वमिष्टमेवेति पूर्वदलं न देयम्, अत एव मूले, 'मुग्धा नववयःकामा' इति दशरूपके च तथोपात्तमिति सचेतसो विवेचयन्तु।

मुग्धां विभजते—

सा च—अज्ञातयौवना, ज्ञातयौवना च।

सा मुग्धा, पूर्वस्त्वर्थे परः समुच्चये चकारः। ज्ञातमज्ञातं च यौवनं ययेति तृतीयान्तार्थबहुव्रीहिरेवेह सहृदयहृदयङ्गमः, स्वयम-

ज्ञायमानस्य तस्य परैर्ज्ञायमानत्वात् । मुग्धालक्षणघटकयौवने ज्ञायमानत्वमज्ञायमानत्वं च क्रमेण निवेश्यामू लक्षणीये ।

मुग्धाया व्यापारनिबन्धनं भेदं दर्शयल्लँक्षयति—

सैव क्रमशो लज्जाभयपराधीनरतिर्नवोढा ।

सैव मुग्धैव, न तु मध्याप्रगल्भे, क्रमशः समयविशेषेण परिचयवशात्, लज्जया सहजशालीनतया, भयेनापरिचितपूर्वारसम्भोगात् किं भविष्यतीति शङ्कया च पराधीना परतन्त्रा (तत्प्रधानेति यावत्) रतिः केलिर्यस्यास्सा, नवोढा नवमूढा प्रियेण सम्भोगं प्रापिता, नवमूढं यस्या इति वा । इह लज्जाभीत्योः सामानाधिकरण्यमेव, अनुभवात् । तथा च लज्जाभयप्रधानरतिकत्वमेव नवोढात्वं ज्ञेयम्, अधिकन्त्वप्रयोजनम् अव्यभिचारात् । एवमग्रेऽप्यवसेयम् ।

तद्विशेषमाह—

सैव क्रमशः सप्रश्रया विश्रब्धनवोढा ।

सैव नवोढैव, क्रमशः परिचयक्रमेण प्रश्रयेण विनयेन विश्वासेन वा सहिता विश्रब्धनवोढा । विश्रब्धा चासौ नवोढेति कर्मधारयः । विश्रम्भ एव किं भविष्यतीति भीतिनिवर्तकः स च परिचयमूलकः । विश्रब्धत्वं मुग्धालक्षणे निवेश्य लक्षणमस्या विधेयम् । अनयोः पूर्वं लज्जा, ततो भीतिः, तदनन्तरं परिचयवशात् पतिदर्शनस्पर्शनादौ विश्रम्भ इति 'कृतान्तः कान्तो वा समजनि न भेदः प्रथमतस्ततो द्वित्रैर्मासैर्मनुज इति जग्राह हृदयम्" इत्यादिपद्योक्तः क्रमो ज्ञेयः । न चैतत्प्रकारद्वयमभिनवम्, 'रतौ वामा मृदुः क्रुधि' इत्यनेन परत्रापि तत्सूचनात् ।

मुग्धाऽसाधारणधर्मानाह—

अस्याश्चेष्टा—क्रियाह्रिया मनोहरा, कोपे मार्दवम्, नवभूषणे समीहा च ।

अस्या मुग्धायाः । एकवचनं पूर्ववज्जात्यभिप्रायिकम् । क्रियासु ह्रीर्दर्शनादिव्यापारविषयिणी लज्जा, तया मनोहरा, सलज्जव्यापा-

राणामतिमनोरमत्वाच्चेतश्चौर्य्यकारिणी, लज्जायाश्चित्तवृत्तिविशेषरूपताया जगन्नाथेन स्वीकरणात्सविषयत्वम्। कोपे माने, मार्दवं झटित्यपनेयता। नवभूषणेऽनुपभुक्तालङ्करणे, समीहा दिधरिषा।

मुग्धा यथा।

उदाह्रियत इति शेषः, एवं परत्राप्युन्नेयम्। उदाहरणमाह—

आज्ञप्तं किल कामदेवधरणीपालेन काले शुभे
वस्तुं वास्तुविधिं विधास्यति तनौ तारुण्यमेणीदृशः।
दृष्ट्या खञ्जनचातुरी मुखरुचा सौधाधरी माधुरी
वाचा किञ्च सुधासमुद्रलहरीलावण्यमामन्त्र्यते ॥ ४ ॥

कामदेवधरणीपालेन विजिगीषुस्मरनृपेण, एणीदृशो मृगाक्ष्याः, तनौ वपुषि, शुभे मङ्गले, काले वेलायाम्, वस्तुं चिरं स्थातुम्, आज्ञप्तं विधेयतयाऽऽदिष्टम् तारुण्यं यौवनम्, वास्तुविधिं सुखचिरस्थितये वास्तोर्वेश्मभुवो लक्षणया तदधिष्ठातृदेवतायाः विधिं पूजनस्य क्रमं कल्पं वा, किल निश्चितम्, विधास्यति करिष्यति, (इति हेतोः तस्याः) दृष्ट्या दृशा, खञ्जनस्य खञ्जरीटस्य, चातुरी कौशलम्, मुखरुचा वदनकान्त्या, सुधाधरस्येयं सौधाधरी चान्द्री, माधुरी सरसता मनोहरता वा, किञ्च तथा, वाचा वचनेन, सुधासमुद्रस्य पीयूषसिन्धोः, लहरीणां तरङ्गाणाम्, लावण्यमङ्गच्छायाऽतिरेको लक्षणया सौन्दर्य्यम्, आमन्त्र्यते भवद्भिः कृपयाऽत्र भूषणायागन्तव्यमिति निमन्त्र्यत आकार्य्यत इत्यर्थः।

तथा च 'जिगीषौ च देवोक्तिः' इति क्षपणकः, 'वेश्मभूर्वास्तुः' 'कल्पे विधिक्रमौ' इत्यमरः, 'तनुः काये कृशे' इति विश्वः, 'खञ्जनः खञ्जरीटे स्यात्' इति मेदिनी, 'मधुरं सरसे ज्ञेयं स्वादुन्यपि मनोहरे' इति धरणिः, 'मुक्ताफलेषुच्छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते' इति भूपालश्च।

अत्र विधिशब्दस्य क्रमार्थत्वान्न कथितपदत्वम्। हेतुपरामर्शके-

तिशब्दस्य भवतीत्यध्याहाराच्च नानभिहितवाच्यत्वम् । जातिभिन्नप्रवृत्तिनिमित्तकस्थले विशेष्यतया वैवक्षिकत्वाद्वधरणीपालशब्दयोः परनिपातः । कामत्वेन कामिनीवपुर्भूमौ निवासस्यौचित्यम् , धरणीपालत्वेनानुल्लङ्घनायाक्षत्वम् , तृतीयया ऽऽज्ञायाः साक्षाद्धितत्वेनाशुपालनोयता, पणीदृक्त्वेन विभ्रमस्फुरणयोग्यता, तनुत्वेन कार्श्यद्वारा सङ्कीर्णत्वम् , ततोऽन्येषां दुर्गत्वम् , तावता निरुपद्रवत्वाद्वश्यं निवासार्हता, द्वितीयया वास्तुविधेरीप्सिततमत्वम् , ततस्तद्वश्यकर्तव्यत्वमुखेन रामणीयकम् , खञ्जनचातुरीपदेन नीलकटाक्षविक्षेपरीतिमत्त्वम् , यद्वा खञ्जनवत् समयविशेषसञ्चारितया कादाचित्कत्वम् , ततोऽपि सत्रपत्वम् , तेन कामनीयकम् , तावता क्रिया ह्रिया मनोहरत्वम् , यद्वा खञ्जनस्य निधिमद्देशयोगितेव दृशागुणवज्जनासक्तिः, यद्वा तद्वत्सूक्ष्मदर्शिता तया यौवनस्य प्रत्यग्रत्वं व्यज्यते । न तु चाञ्चल्यमेव केवलं व्यज्यते, तथा सत्येणीदृक्पदस्यैव तावत् प्रतीतिकारितयाऽस्य वैयर्थ्यम् । पणीपदस्य स्वपर्य्यायमृगपदोपलक्षकता तु नेयार्थत्वदूषणाक्रमणाच्च प्रगुणा । पतीत्येण इत्यादि यातायातकर्त्रादिरूपयौगिकार्थश्च न सुबोधः, योगाद्रूढेर्बलीयस्त्वात् । अर्थान्तरन्त्वनादेयमेव, अनास्वाद्यत्वात् । क्रमेणातिदुर्लभत्वावश्यस्पृहणीयत्वप्रियतमहृदयाधिनिवारकत्वरूपतमोनिरासकत्वपर्य्यवसायीनि लोकोत्तरचमत्कारित्वास्वाद्यत्वसदन्तसमतज्योत्स्नास्वरस्वानि व्यञ्जयितु चातुरीमाधुरीलावण्यपदैर्वाच्यानां चातुर्य्यमाधुर्य्यलावण्यानां मानवमृद्वीकादिधर्मतया खञ्जनचन्द्रलहरीषु बाधाश्चलात्वलत्वाह्लादकत्वोज्ज्वलत्वानि लक्ष्यन्ते । सौधाधरीपदेन चन्द्रवत् सदाप्रसन्नतया कोपरूपमालिन्याभावः, कोपेऽप्यल्पापनेयतालक्षणमृजुत्वम्, सुधाऽधिकरसवत्ता च, सुधासमुद्रलहरीपदः क्रमेण जीवनदातृत्वसमर्घ्यावत्त्वप्रतिक्षणविलक्षणरसवत्त्वानि । समष्ट्या तु वाचोनैसर्गिकमार्दवादिभूषणसत्त्वेऽपि विलक्षणस्य लावण्यलक्षणनवीनभूषणस्य समीहा, आकारणीयानां स्त्रीत्वक्लीबत्वनिर्देशेन केवलं स्त्रीणां षण्ढानाञ्च राजान्तःपुरप्रवेशाधिकारः, परस्पराह्वानौचिती च, तृतीयया दृष्ट्यादीनामन्यनैरपेक्ष्येणाह्वायकत्वान्मदनमहीपसेवाऽतिशयः, अनियोगेऽप्याकार-

णापरायणत्वादिङ्गितज्ञत्वं सेवाप्रावीण्यं च व्यज्यते। मृगदृशस्तनौ मदनमहीपाज्ञप्ततारुण्यामात्यकर्तृकवास्तुविधेर्विधास्यमानत्वेन सम्प्रति तारुण्याभावात्प्रकृते मुग्धालक्षणासमन्वयशङ्का तु न मनागपि सचेतसां चेतसि पदमासादयेत्, कार्य्यकारणविपर्य्ययात्मकातिशयोक्तिभङ्ग्याऽत्र दृक्चातुर्य्यादेः कार्य्यस्याशुभावितां दर्शयितुं कारणात्तारुण्यात्पूर्वमेवाविर्भावस्य 'आमन्त्र्यत' इति वर्तमानार्थकलटा निर्दिष्टस्य कविप्रौढोक्त्या सिद्धं जागरूकत्वात्। स्वभावादेवेयमेणीदृक् तत्रापि कामादेशेन यौवननिवासात्कीदृग्लावण्यवती स्यादिति चित्रीकरणार्थं किलशब्दगम्ये 'शेषे लृडयदौ' इति सूत्रेण सर्वलकारापवादे विदधातोर्वर्तमाने लटि यौवनस्य तात्कालिकतायाः सुवचत्वाच्च। ननु चातुरीप्रभृतेरामन्त्रणमेवेति कथमुक्तसन्दर्भसङ्गतिरिति चेत्, न तच्चारिमातिशयप्रकाशनायामन्त्रणवर्णनेऽपि बीजरूपेण तत्स्थितेः प्रागपि स्वीकारात्, यौवने नवीनत्वस्यैव निवेशात्तदादिमदशायां विलासानां सहृदयमात्रवेद्यतया भूयः प्रकाशाभावेऽपि तत्सद्भावाच्च।

निवासोन्मुखकामाज्ञप्ततारुण्यचिकीर्षितवास्तुविधानस्येतरवाक्यार्थहेतुत्वात्काव्यलिङ्गालङ्कारोऽत्र वाच्यः, हेत्वर्थकेतिशब्दाध्याहारेण हेतुत्वस्य वाच्यत्वात्। अर्थाध्याहारपक्षस्तु शाब्दिकानुगतिपरायणैरालङ्कारिकैर्नादृतः। एवं प्रस्तुतनायिकादृगादिप्रशंसायै तत्तुल्यगुणाप्रस्तुतखञ्जनचातुर्य्यादिप्रशंसनात् तुल्ये प्रस्तुते तदन्यतुल्याक्षेपरूपाप्रस्तुतप्रशंसोपन्यासोऽपि नेह सम्यक्, प्रस्तुतस्य व्यङ्ग्यत्व एव तस्याः स्वीकारात्, अत्र तु नायिकादृगादीनां वाच्यत्वम्, किन्तु खञ्जनचातुर्य्यादेरत्रादावसम्भवात्तत्सादृश्ये पर्य्यवसानमिति।

अभवन् वस्तुसम्बन्धो भवन्वा यत्र कल्पयेत्।
उपमानोपमेयत्वं कथ्यते सा निदर्शना॥

इत्युद्भटोक्तलक्षणया निदर्शनया, रिकराङ्कुरेण च दृष्टयादीनामामन्त्रणकर्तृत्वसम्बन्धाभावेऽपि तत्सम्बन्धोक्त्या विषयिणा विषयस्य निगरणमतिशयस्तदुक्तिः। इति जगन्नाथेन लक्षिताया असम्बन्धे सम्बन्धरूपाया अतिशयोक्तेरङ्गाङ्गिभावेन सङ्करस्तु निगद्यते। 'अङ्गाङ्गिभावावस्थानम्' इति दण्डिनोक्तः सङ्करः, 'एकस्यापि सङ्करः'

इति प्रकाशलक्षितेन वृत्त्यनुप्रासेन, वस्तुवास्तुशब्दवृत्तिना 'छेको व्यञ्जनसंघस्य सकृत्साम्यमनेकधा' इति दर्पणलक्षितेन छेकानुप्रासेन च "अलङ्कारस्यालङ्कारयोगित्वं संसृष्टिः' इति वामनोक्ता संसृष्टिश्च। सा तु 'तिलतण्डुलवद्व्यक्ता' इति भोजराजदर्शितदिशाऽत्र व्यक्तैव । उद्भटस्तु शब्दार्थालङ्कारनाम्नाऽप्यमुं निरदिशदिति दिक् ॥ ४ ॥

मुग्धाविशेषमुदाहरति—

अज्ञातयौवना यथा—

नीरात्तीरमुपागता श्रवणयोः सीम्नि स्फुरन्नेत्रयोः
श्रोत्रे लग्नमिदं किमुत्पलमिति ज्ञातुं करं न्यस्यति ।
शैवालाङ्कुरशङ्कया शशिमुखी रोमावलीं प्रोञ्छति
श्रान्ताऽस्मीति मुहुः सखीमविदितश्रोणीभरा पृच्छति ॥५॥

नीरात् जलात्, तीरं तटम्, उपागता प्राप्ता (उपतटं प्राप्ता न तु तटम्) शशिमुखी चन्द्रवदना (नायिका), श्रोत्रे कर्णे, इदं ज्ञायमानम्, उत्पलं कुवलयम्, किं लग्नं सम्बद्धम्, इति (शङ्कया) श्रवणयोः सीम्नि उपकण्ठम् (सन्निधौ) मुहुः (एतदग्रेऽपि योज्यम्) वारंवारम्, करम् (एकम्) न्यस्यति, व्यापारयति। तथा शैवालस्य जलनील्याः, अङ्कुरस्य नूतनप्ररोहस्य, शङ्कया, रोमावलीं नवोद्गतलोमलेखाम्, (अपरेण करेण) प्रोञ्छति (अपनिनीषया) परामृशति । तथा अविदितोऽज्ञातः श्रोण्योर्नितम्बयोः (यौवनहेतुकः) भरो भारो यया तादृशी, श्रान्ता खिन्नाऽस्मीति सखीं वयस्याम्, पृच्छति जिज्ञासया वक्तीत्यर्थः । तथा च 'सीमोपकण्ठम्' 'स्यादुत्पलं कुवलयम्' इति धनञ्जयः, 'नेत्रं च गुणे मूले विलोचने' इति त्रिकाण्डशेषः, 'जलनीली तु शैवालम्' इत्यमरश्च ।

इह नयतीति नीरमिति व्युत्पत्त्या तस्या उल्लोलकल्लोलमालाभिस्तीरानयनम्, तावता स्वयमागमनाशक्तिः, तद्बीजतया श्रोण्योर्गौरवम्, तस्याप्यसुवहत्वादपरिचितपूर्वत्वम्, द्वितीयया तीरस्येप्सिततमत्वम्, तेन जलस्थितौ द्वेषः, तन्मूलतया इतिपरम्परयैव न तु साक्षात्, उ-

पेन तटपर्यन्ताप्राप्तिरार्द्रवसनत्यागपूर्वकतीरस्थवस्त्रपरिधानाभावश्च, तत्परिकरतया शङ्कात्रयेणान्तःस्तैमित्यम्, तेन, कार्थेनागमनस्य भूतत्वेन च शङ्कानां द्राघिमा, तादृशशङ्कोन्नीतभ्रूयुगकौटिल्येन मुखस्य शशिसाधर्म्यौचित्यम्, उत्पलस्य लग्नत्वेन जलविहारे स्वतः सम्बद्धतयाऽस्थापनम्, अज्ञात्वा वा स्थापनम्, तेन तदपसारणाय करन्यासस्यौचिती सूच्यते।

एकवचनेन सीम्नोः समत्वम्, नेत्रयोः सीमानं यावत्स्फुरणेनानुभावमुखेन वितर्कः, अङ्कुरपदेन प्रत्यग्रत्वद्वारा सौन्दर्यम्, एकवचनेन सूक्ष्मता, सखीत्वेन विश्रम्भः, तेन प्रश्नौचित्यम्, मुहुःकरन्यासादिना शङ्काऽतिशयः, करन्यसन-प्रोञ्छन-प्रश्नानां लटा वर्तमानत्वम्, ततस्तदाविर्भावहेतूनां नयनविशालतालोमलतोद्गमगौरवाणां, तात्कालिकप्रायत्वेनाज्ञाततालक्षणमज्ञातयौवनात्वं बोध्यते। यत्तूत्पलमित्येकवचनेन नेत्रस्य विशालता, करमित्येकवचनेनैकस्यैव करस्योभयत्र व्यापारकरणात्सम्भ्रमातिशयश्च व्यज्यत इति। तन्न, एकवचनवाच्यार्थस्यैकत्वस्यैव तत्र बोधे पर्यवसानात्। तथा हि पयसि प्रतिबिम्बितमेकमेव लोचनं पश्यन्त्याः सशङ्काया मृगदृशस्तदवगमायैकस्यैव करस्य न्यासः समुचित इति नात्र व्यक्तः सञ्चारः। नेत्रद्वयप्रतिबिम्बदर्शने तूत्पलद्वयसम्बन्धशङ्कैव स्यात्। न हि विशालतममप्युत्पलद्वयसम्बन्धशङ्कैव स्यात्। न हि विशालतममप्युत्पलमेकं नयनद्वयतुलां कदाचिदारोहति। नाप्यसादृश्यमूलकः सन्देहः सहृदयमनोहरः। न वा सम्भ्रमातिशयादेकमेव करं प्रेरयेदिति नियमः। प्रत्युत तदानीं करद्वयप्रेरणमेवोचितम्। अतएव श्रोत्र इत्येकवचनं च स्वरसतः सङ्गतम्।

एवं श्रोत्रे किमिदमुत्पलं लग्नमिति ज्ञातुं श्रवणयोः सीम्नि स्फुरन्नेत्रयोः करं न्यस्यतीत्यन्वये वैयधिकरण्यं स्यादिति न शङ्कनीयम्। द्राघिमवतो नेत्रस्य श्रुतिसीमनि विद्यमानत्वात्। नेत्रद्वये करन्यासस्त्वेकत्र दर्शनात्सम्भावनया परत्रापि विहितः सम्भ्रमातिशयं पुष्णाति। एवञ्च 'श्रोत्रे' इत्यस्य नायिकासंशयकोट्यन्तर्गतत्वेन 'श्रवणयोः' इत्यस्य कविवाक्यान्तर्गतत्वेन च न पुनरुक्तिशङ्का इति प्राचामुक्तिरेव गरीयसी, न तु तत्प्रतिकूलाऽर्वाचाम्, निरूपकसाकाङ्क्षादिस्थले

तदर्थस्यैव भूयोभूयः सर्वनाम्ना पर्य्यायान्तरेण वोपादानस्य सकलालङ्कारिकसिद्धान्ताविरुद्धत्वादिति न परोक्तं प्रेक्षावताम्।

यत्तु स्फुरन्नेत्रयोः सीम्नि किमिदमुत्पलं लग्नमिति ज्ञातुं श्रोत्रे करं न्यस्यतीत्यन्वय इति, तन्न तादृशनेत्रज्ञानाज्ज्ञातयौवनात्वापत्तेः, श्रवणयोरित्यस्याधिक्यापत्तेश्च। एवं स्फुरन्ती नेत्रे यत्रेति बहुव्रीहावस्य श्रवणयोर्विशेषणीकरणेऽप्युक्तदोषतादवस्थ्यम्, द्विवचनैकवचनयोरुक्तार्थासङ्गतिश्च। अज्ञातयौवनात्वरूपव्यङ्ग्यस्येह विदितेत्यादिपदवाच्यत्वेऽपि प्रामाणिकश्चेद् ध्वनिव्यपदेशः, तर्हि वाच्याधिकचमत्कारकव्यङ्ग्यान्तरमेवादाय पूरणीयः। 'अतिशायिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथितः' इति मम्मटोक्तेः। उपमेयस्य लोचनस्य संशयविषयत्वेन (विषयस्य सन्दिह्यमानत्वे सन्देहः) इति सर्वस्वकारलक्षितः सन्देहालङ्कारः। भ्रान्तिमतः सत्त्वकथनं तु भ्रान्तिमूलकमेव, किमा वितर्कस्य बोधनात्, तत्त्वज्ञानाय करन्यासाद्युक्तेश्च। नहि भ्रान्तौ वितर्कः, परीक्षाप्रवृत्तिश्च भवति। अतएव 'परिणामः, क्रियार्थश्चेद् विषयी विषयात्मना' इति पीयूषवर्षोक्तलक्षणस्य परिणामस्याप्यत्र नैव सम्भावना। न हि केवलं प्रकृतोपयोगितैव वितर्कावपि परिणामं साधयितुमीष्टे। किञ्च नात्र नेत्रगामोद्गमयोरुत्पलशैवालाङ्कुरत्वयोरारोपः। अपि तु वितर्कः। वायकालिकेच्छाजन्यज्ञानस्य प्रकृते स्फुटमसत्त्वात्। औपम्यमात्रन्तु 'उपमैका शलूषी सम्प्राप्ता चित्रभूमिकाभेदात्' इति चित्रमीमांसोक्तेः संशयादावपि मूलमस्त्येवेति न तावतैव तद्व्यपदेशः सुवचः। सकलालङ्कारभित्तिभूतातिशयोक्तेश्छाया तु छायाऽतिशयं पल्लवयत्येवेति विवेचनीयम्॥ ५॥

ज्ञातयौवनामुदाहर्तुमाह—

ज्ञातयौवना यथा।

ज्ञातयौवनामज्ञाततत्पतिका काचिद्विदग्धा सखी पृच्छति।

**स्वयम्भूः शम्भुरम्भोजलोचने! त्वत्पयोधरः।**
**नखेन कस्य धन्यस्य चन्द्रचूडो भविष्यति॥ ६॥**

(अयि) अम्भोजलोचने ! कमलनयने ! स्वयम्भूः स्वतः समुत्पन्नः, शम्भुः, श्रेयस्करः (सुखोत्पादकः प्रियतमस्येति शेषः) शिवश्च, त्वत्पयोधरः तव कुचौ गङ्गाधरश्च, कस्याज्ञातस्य, धन्यस्यानिर्वचनीयसौभाग्यविभूषितस्य पुण्यवतश्च, नखेन नखरेण (सुरते पूजाऽवसरे च) चन्द्रचूडश्चन्द्रसदृशकुटिल (नख) चिह्नशालिमस्तकः चन्द्रशेखरश्च भविष्यतीत्यर्थः। यथा च 'धन्यं पुण्यवति त्रिषु' इति मेदिनी, 'नखोऽस्त्री नखरः' 'शिखा चूडा' इत्यमरश्च।

अत्र यतस्ते पयोधरः स्वयम्भूः शम्भुः साक्षाच्छिवः, ततस्तेनावश्यं चन्द्रचूडेनापि भाव्यमिति कस्य नखक्षतेन तथा सम्पत्स्यत इति प्रश्नस्याशयः, कस्ते पतिः (उपभोक्ता) इति परमार्थः। अम्भोजपदेन लोचनयोः सरसता, स्वयम्भूपदेन स्तनपक्षे नायकमुहुःकरपरामर्शाजन्यत्वेन शिवपक्षे त्वन्यजन्यत्वरूपजन्यनियतधर्मवैधुर्य्येण श्लाघ्यत्वम्, शम्भुपदेनैकस्मिन् पक्षे विलक्षणानन्दजनकत्वात्, पक्षान्तरे (भक्तप्रार्थित) सुखदायकत्वात् सेवनीयतमत्वम्, पयोधरपदेनैकत्र नाम्ना मेघसादृश्यात् पयसः स्वरूपयोग्यनिमित्तत्वात् (क्षीरनाड्यः कुमारीणां जलेन परिपूरिताः) इत्यायुर्वेदानुमतस्य पयसो धारणाद्वा तत्त्वेन कामिस्वान्तसन्तापनाशकत्वम्, अन्यत्र सुरसिन्धुसलिलस्य शिरसि वहनात्तत्त्वेन सांसारिकतापत्रयान्तकत्वम्, धन्यपदेन तादृशशिवसपर्य्यावत्त्वदीयस्तनस्पर्शस्यानेकजन्माचरितपुण्यपरम्परापरिपाकसाध्यत्वं बोध्यते। विलासाभिज्ञत्वेनोत्तरदानं सम्भाव्य सख्या कृतः प्रश्न एवासौ तरुणाज्ञातयौवनात्वे प्रतिभूः शिवस्यापि सपर्य्याऽवसरे शिरसि भक्तनख (कान्ति) स्पर्शो भवतीति नखस्योभयत्रान्वयः। चन्द्रः, चन्द्र इव चन्द्रश्चूडायां यस्येति बहुव्रीहिः।

सम्बोधने समासगतार्थोपमा। त्वत्पयोधरः शम्भुरिति रूपकम्। स्वयम्भ्वादिपदे श्लेषस्तु न प्ररूढः रूपकप्राधान्येनार्थान्तरस्य दौर्बल्यात्, किन्तु छायात्मना विद्यमानस्तदेवोपकरोति। रूपकेण स्वाभाविकमेवौपम्यमात्रं व्यज्यत इति नात्र निदर्शना, अतिशयोक्तिस्तु पूर्ववदेव। मकारभकारयोरसकृदुपादानेन वृत्त्यनुप्रासश्च। नचात्र स्वरवैसादृश्येन 'वर्णसाम्यमनुप्रासः' इति मम्मटोक्तसामान्यलक्षणस्यासमन्वया-

त्तदभावः शङ्कनीयः तस्य 'वर्णपदं व्यञ्जनपरम्' इति प्रदीपकृता व्याख्यातत्वात् 'अनुप्रासः शब्दसाम्यं वैषम्येऽपि स्वरस्य यत्' इति विश्वनाथोक्तेश्च व्यञ्जनसादृश्यस्यैव तत्प्रयोजकत्वात् ॥ ६ ॥

नवोढामुदाहर्तुमुपक्रमते—

नवोढा यथा ।

नायको नवोढाव्यापारं विमृशति, वयस्यं वक्ति वा ।

हस्ते धृताऽपि शयने विनिवेशिताऽपि
क्रोडे कृताऽपि यतते बहिरेव गन्तुम् ।
जानीमहे नवबधूरथ तस्य वश्या
यः पारदं स्थिरयितुं क्षमते करेण ॥ ७ ॥

( यतोऽस्माभिः ) हस्ते धृताऽवलम्बिताऽपि (तथा विविधप्रयत्नैः) शयने तल्पे ( क्रीडापर्य्यङ्क इति यावत् ) विशेषेण बलात् प्रचुरप्रणयादरदर्शनपुरःसरं निवेशिता स्थापिताऽपि ( न तु स्वेच्छया स्थिता ), (या), बहिरेव (केलिनिलयादिति शेषः), गन्तुम् (लज्जाभयपरतन्त्रत्वात्तारुण्याक्रमणादपसरच्छैशवसुलभचाञ्चल्याद्वा) पलायितुम्, बहिरपि गन्तुमेव ( न तु मद्विहृतया स्थातुम् ) वा, यतते प्रयस्यति । ( अतस्तथापि ) यः कश्चिदचिन्त्यकौशलशाली, पारदं रसेन्द्रम्, करेण कराग्रेण, स्थिरयितुं स्थिरं कर्तुम्, क्षमते शक्नोति । तस्य ( तस्यैव नत्वन्यस्य ) ( सा ) नवबधूर्नवोढा, वश्या प्रणेया, भवति, ( इति ) जानीमहेऽवगच्छामो मन्यामहे वेत्यर्थः । अयमेव नवबधूस्वभावः केनचिद्वर्णितः—

भुजपञ्जरे गृहीता नवपरिणीता रहसि वरेण वधूः ।
तत्कालजालपतिता बालकुरङ्गीव वेपते नितराम् ॥

तथा च 'क्रोडं भुजान्तरम्' 'वश्यः प्रणेयः' इत्यमरः, 'रसेन्द्रः पारदः प्रोक्तः' इति तारपालः, 'योग्ये शक्ते हिते क्षमम्' इति धरणीधरश्च ।

अत्र हस्त इत्यादावधच्छेदकत्वं सप्तम्यर्थः अवयवावयविभावसम्बन्धेन करपदस्य तदग्रे शुद्धा लक्षणा । स्थिरयितुमित्यत्र 'तत्क-

रोति' इति णिजन्तात्क्रियार्थायां क्रियायां तुमुन्। लटा यत्नस्याविरतत्वम्, निदर्शनन्यासेन वशीकरणस्यासम्भाव्यता, अपिशब्दैरनिर्वाच्यता ततो भीतित्रपाऽतिरेकः, णिज्भ्यां स्वतोऽसम्भवित्वम्, नवपदेन तत्रयत्नौचित्यम्, बध्नाति (प्रणयेन) बधूरिति व्युत्पत्त्या तथाऽऽचरणेऽस्यपरिहेयत्वम्, व्यज्यते।

'जानीमहे' इति द्योतकस्य सद्भावेऽप्युत्प्रेक्षणस्याभावात् 'अहन्त्विन्दुं मन्ये' इत्यादाविव रूपकोक्तदिशा नोत्प्रेक्षा। यत्तच्छब्दार्थयोरभेदान्वयस्यासम्भवाद्बिम्बानुबिम्बभावे पर्यवसानान्निदर्शना। न तु—

अर्थविशेषः पूर्वं यादृङ्न्यस्तो विवक्षितेतरयोः।
तादृशमन्यं न्यस्येद्यत्र पुनः सोऽत्र दृष्टान्तः॥

इति रुद्रटोक्तलक्षणो दृष्टान्तः, साधारणधर्मानुपादानात् स्वस्वार्थे वाक्यार्थयोः सापेक्षत्वाच्च। दृष्टान्ते तु साधर्म्योपादानं वाक्यार्थयोः स्वस्वार्थे निरपेक्षत्वं चेति प्रभोद्द्योतयोः स्पष्टम्। सा च हस्तावलम्बनादीनां स्थितिकारणानां सत्त्वेऽपि कार्य्यस्य स्थितेरकथनाद् 'विशेषोक्तिरखण्डेषु कारणेषु फलावचः' इति प्रकाशलक्षितयोक्तनिमित्तविशेषोक्त्या सङ्कीर्णाया नवबधूमात्रवृत्तिव्यापारवर्णनात् स्वभावोक्त्या कारणानुपादानेऽपि बहिर्गतियत्नरूपकार्य्यस्योपन्यासात्—

सेयं विभावनाख्या यस्यामुपलभ्यमानमभिधेयम्।
अभिधीयते यतः स्यात् तत्कारणमन्तरेणैव॥

इत्युद्भटेन लक्षिताया विभावनायाः, हस्तग्रहणादिषु बहिर्गत्यभावहेतुषु सत्स्वपि कार्य्याभावोपन्यासाद् 'विशेषोक्तिरखण्डेषु कारणेषु फलावचः' इति प्रकाशोक्तविशेषोक्तेश्च विनिगमनाविरहात् सङ्करेण च सङ्कीर्णा। 'उक्ता वसन्ततिलका तभजा जगौ गः' इति लक्षिता वसन्ततिलकाच्छन्दः॥

नवोढाविशेषमुदाहर्तुमाह—

विश्रब्धनवोढा यथा।

सुवतुं दृष्ट्वा कश्चन विदग्धो विरही परं पृच्छति, स्वयं वा विमृशति।
दरमुकुलितनेत्रपालिनीवीनियमितबाहुकृतोरुयुग्मबन्धम्।
करकलितकुचस्थलं नवोढा स्वपिति समीपमुपेत्य कस्य यूनः॥८॥

नवोढा नववधूः, कस्याविज्ञातस्य, यूनस्तरुणस्य, समीपं सन्निधिम्, उपेत्यागत्य, दरमीषत् मुकुलिते कुड्मलिते ( अर्धविकसिते ), नेत्रयोः पाल्यौ प्रदेशौ, यस्यां क्रियायां तथा, एवं नीव्यां कटिवसनग्रन्थौ, नियमितोऽनन्यव्यापारतया नियमं बन्धं प्रापितः, एको बाहुर्भुजो, यस्यां तथा, किञ्च कृतः सम्पादितः, ऊरुयुग्मस्य सक्थिद्वयस्य, बन्धः परस्परसंलग्नता यस्यां तथा, स्वपिति शेत इत्यर्थः ।

तथा च 'ईषदर्थे दरः प्रोक्तो दरः साध्वसगर्तयोः' इति विश्वः, 'कुड्मलो मुकुलः' इत्यमरः, 'पालिः कर्णलतायां स्यात् प्रदेशे' इत्यजयः, 'नीवी स्त्रीकटिबन्धने' इति हैमश्च ।

अत्र कस्येत्यनेनानिर्वाच्यभाग्यशालित्वद्वारा नवोढा सान्निध्यमात्रस्याप्यतिदुर्लभत्वम् , युवपदेन मनोहरणौचित्यम्, समीपपदेन क्रीडादिव्यवच्छेदः, उपेत्येति शुद्धधातुनोपागमने सख्यादिप्रयासानतिशयः, तेन नायकस्य मनोरमत्वं परिचयप्रणयप्रयोज्यो विश्रम्भश्च, नेत्रयोर्मुकुलनानुभावेन लज्जा, दरपदार्थेन तदल्पत्वेन विश्रब्धता, नेत्रपालिरिति स्त्रीत्वनिर्देशेन लज्जौचित्यम्, 'नीवी मूलधनेऽपि स्यात्' इति विश्वप्रकाशान्नीव्यां मूलधनसादृश्येन साधर्म्यसंरक्षणीयतमत्वम्, नियमितपदेन बन्धस्य दुष्परिहरत्वम् , बन्धपदेन च दार्ढ्यम्, ताभ्यां अपोत्कर्षं ईषद्भीतिश्च, कृतपदेन नियमनस्य ज्ञानप्रयोज्यत्वम्, युग्मपदेन स्वाभाविकसाहचर्यम्, एककरेण समस्तवक्षसः समाच्छादनात् कुचयोरविरलत्वम्, स्थलपदेन वक्षोजयोरनत्युन्नतत्वम्, क्रियाविशेषणचतुष्टयेन नायिकाविशेषणालभ्यः स्वापे विच्छित्तिविशेषः सम्भोगस्यासमीहितत्वं च, स्वपितीति स्वापमात्रेण नवोढाया रते रतिदुरापत्वं चावेद्यते । लज्जाभयविश्रम्भाणां समावेशान्नायिकाया विश्रब्धनवोढात्वम् । नवोढाया लज्जाभयोभयप्रधानरतिकत्वेऽपि प्रकृते—

मनागञ्चितपक्ष्माग्रमपास्तकनीनिका ।
सन्त्रस्तोर्ध्वपुटा दृष्टिर्लज्जिता लज्जिते स्त्रियः ॥

इति वैजयन्तीलक्षिता लज्जितैव मुकुलिता दृष्टिः; न तु दरशब्दस्य भयार्थकत्वाद्भीता, तस्या हि—

आन्तर्निष्क्रान्तमध्या च विस्तारितपुटा भिया ।

विलोलतारका भीत्या दृष्टिरुक्ता भयान्विता ॥

इति विस्तारितपुटत्वोक्तेर्मुकुलनाद्भेदः।

ननु 'सपदि मुकुलिताक्षीं रुद्रसंरम्भभीत्या' इति कालिदासोक्तस्य भीत्याऽप्यक्षिमुकुलनस्य का गतिः? इति चेत्, मैवम्—

आकुञ्चीकृतपक्ष्माग्रा सम्यक्च्चञ्चत्कनीनिका।

या दृष्टिः कुञ्चिता सोक्ता तेजोदुष्प्रेक्ष्यवस्तुनि ॥

इत्युक्तेः स्त्रीत्वस्वाभाविकभीतिसहकृतशिवनयनज्वलज्ज्वलनदर्शनजनिताद्भुतजन्याकुञ्चनस्यैव तत्र सत्त्वेन कुञ्चितात्वात्। 'कलिवल्लीकामधेनू' इत्युक्त्या कलेराच्छादनार्थकत्वम्। काव्यलिङ्गच्छायाऽतिशयोक्तिभ्यां सङ्कीर्णा स्वभावोक्तिरलङ्कारः। 'अयुजि नयुगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रा' इति लक्षिता पुष्पिताग्रा छन्दश्च ॥८॥

मुग्धाप्रस्तावं समाप्य प्राप्तावसरत्वान्मध्यां लक्षयति—

समानलज्जामदना मध्या।

समानौ तुल्यबलतया मिथोऽप्रतिबद्धप्रसरौ लज्जामदनौ यस्याः सा मध्येति लक्ष्यनिर्देशः। तदुक्तं शृङ्गारतिलकेऽपि—'तुल्यलज्जास्मरा मध्या मोहान्तसुरतक्षमा' इति न्यूनाधिकभावशून्यलज्जामदनोभयमध्यात्वमिति पर्य्यवसितम्। लज्जावत्त्वमात्रं मुग्धायाम्, मदनवत्त्वं तन्मात्रं वा कुलटादौ, तदुभयं च प्रगल्भायामतिव्याप्तमिति लज्जामदनयोः सत्त्वं साम्यं चोपात्तम्। प्रगल्भायान्तु मदनस्याधिक्याद्वैषम्यमेव।

मध्याया अवस्थान्तरमाह—

एषैव चातिप्रश्रयादतिविश्रब्धनवोढा।

एषा मध्यैव, न तु मुग्धा प्रगल्भा वा, अतिप्रश्रयाद् विश्रब्धनवोढाऽपेक्षयाऽपि विश्रम्भाधिक्यात् तथा। नन्वेष मध्याया भेदो न सम्भवति तस्यां मुख्यस्य केलिवैयात्यस्य सर्वसम्मतत्वात् प्रकृते नवोढात्वापादकत्रपायाः सत्त्वेन तदभावात्, तथा चायं विश्रब्धनवोढावन्मुग्धाया एव भेदः। एवं चायं पाठः प्रक्षिप्त एव, प्राचीनैरगणितत्वादुदाहरणानुपलम्भाच्चेति चेत् न, इह त्रपासद्भावेऽपि मध्यास्वरूपाधायकसूक्ष्मवैयात्यसत्त्वस्य सहृदयानुभूतत्वाद्, उदाहरणस्य कौस्तुभादौ

स्फुटत्वाच्च। न चैवं विश्रब्धनवोढाऽपि मध्यायामेवान्तर्भवेदिति वाच्यम्। तत्र क्रीडाऽऽक्रमणादितितिक्षालक्षणस्य विश्रम्भस्याङ्कुरितप्रायत्वेनासर्ववेद्यतया मुग्धात्वस्यैवेष्टत्वात्। इह तु तस्यातिमात्रतया स्फुटत्वस्यैवाङ्गीकारात्।

मध्याया धैर्याधैर्यनिबन्धनौ धर्मावाह—

अस्याश्चेष्टा, सागसि प्रेयसि धैर्ये वक्रोक्तिः, अधैर्ये परुषवाक्।

सागसि प्रतीपाङ्गनासङ्गमापराधान्विते, प्रेयसि प्रियतमे (विषये), धैर्ये (नायिकायाः) धीरतायाम् (सत्याम्), वक्राश्लेषेण नानाऽर्थप्रत्यायकसंश्लिष्टशब्देन, काक्वाऽर्थान्तरव्यञ्जकध्वनिविशेषेण, वा कुटिला (चमत्कारिणी) नानाऽर्थावगाहिनी, चासावुक्तिर्वाक्। अधैर्येऽधीरतायाम्, परुषा कठोरार्थोपस्थापिका वाक्, अस्या मध्यायाश्चेष्टा धर्म इत्यर्थः। तथा च 'आगः स्यादेनोवद्ये मन्तौ' इति हैमः। 'श्लिष्टैः पदैरनेकार्थाभिधाने श्लेष इष्यते' इति विश्वनाथः। 'काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः' इत्यमरश्च।

अत्र प्रेयसीति वैषयिकाधारे सप्तमी, प्रेयस उक्तेरुद्देश्यत्वरूपविषयत्वसत्त्वात्। शाब्दिकादिनये हि ज्ञानाद्यतिरिक्तेऽपि सविषयकत्वव्यवहारः। न्यायनये त्विह लक्षणयैव निर्वाहः। 'यस्य च भावेन भावलक्षणम्' इति सूत्रेण सप्तम्याः स्वीकारस्तु नेतुरुद्देश्यत्वाप्रतीत्यविच्छित्तिभङ्गप्रसङ्गान्नोचितः। एवं 'वक्रोक्तिः, परुषवाक्' इत्यनयोर्बहुव्रीहिकल्पनमप्यसङ्गतम्, तथा सति धर्मिपरत्वेन धर्मतयोपन्यासस्य नैव सामञ्जस्यम्।

अतिविश्रब्धनवोढामुदाहर्तुं कथयति—

यथा।

कविः सखी नायको वा तन्नायिकावृत्तं वक्ति।

स्वापे प्रियाननविलोकनहानिरेव स्वापच्युतौ प्रियकरग्रहणप्रसङ्गः।
इत्थं सरोरुहमुखी परिचिन्तयन्ती स्वापं विधातुमपि हातुमपि प्रपेदे॥९॥

स्वापे निद्रायाम् (सुषुप्तौ), प्रियस्य कान्तस्य (न तु पतिमात्रस्य), आननं मुखम्, (तस्य) विलोकनम् विशेषेण दर्शनम्, (तस्य) हानिः

त्तिः ( स्यात् ) एव। स्वापस्य च्युतौ भङ्गे ( प्रबोधे ), प्रियेण करयोः ( सुरतार्थम् ) ग्रहणस्य धारणस्य, प्रसङ्ग आपत्तिः ( स्यादेव )। इत्थमेवं प्रकारेण, परि सर्वतोभावेन चिन्तयन्ती स्मरन्ती (विमृशन्ती वा), सरोरुहमुखी कमलानना ( नायिका ), स्वापं विधातुं कर्तुम्, अपि किञ्च, हातुं त्यक्तुम् अपि प्रपेदे प्रववृते ( निश्चिकाय वा ) इत्यर्थः। तथा च 'स्वापः शयननिद्रयोः' 'प्रियो हृद्येऽन्यवत् पुंसि वृद्धिनामौषधे धवे' इति मेदनी, 'चिन्ता तु स्मृतिः' इति शब्दार्णवः, 'गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि' इत्यमरश्च।

अत्र प्रथमप्रियपदेन कमनीयत्वम्, ततस्तदाननावलोकनेऽवश्यकर्तव्यत्वम्, हानिपदेनासुमर्षणीयता, तया स्वापविषयकद्वेषद्वारेताद्दशप्रियाननविलोकनस्य दौर्लभ्यम्, तावता निद्रायां तदलाभे जीवनवैफल्यमननमिति मदनोपचयप्राचीनत्रपाऽपचयाभ्यां तयोः साम्येन नायिकाया मध्यात्वम्, चरमप्रियपदेन निषेधानर्हत्वम्, प्रसङ्गपदेन करग्रहणस्य पौनःपुन्येनावश्यमुत्पत्तिरिति तद्द्वेषः, ततस्त्रपा; अन्ययोगव्यवच्छेदबोधकेनैव शब्देन कार्यान्तरप्रसराभावः, सरोरुहपदेन जाड्यमुखेन चिन्ताऽतिशयः, अपिशब्दाभ्यां कोटिद्वयस्य समकक्षत्वं च सूच्यते। न च 'नैकं पदं द्विःप्रयोज्यं प्रायेण' इति वामनोक्तेरिह त्रिः स्वापपदस्य, द्विः प्रियपदस्य चोपादानात्कथितपदत्वदोषः शङ्क्यः। प्रायपदबोधित उद्देश्यप्रतिनिर्देश्यभावे सप्रयोजनतया तस्या दूषकत्वस्य 'कोदण्डेन शराः शरैररिशिरः' इत्यादौ विवरणकारैरुक्तत्वात्।

परिचिन्तनस्य चरमक्रियाहेतुतया काव्यलिङ्गेन सङ्कीर्णः, सरोरुहमुखीति लुप्तोपमया च संसृष्टः स्वापविधानहानक्रिययोरैककालिकत्वेन भासमानस्य विरोधस्य पर्यवसानेऽसत्त्वाद्विरोधाभासोऽलङ्कारः। क्रिययोर्यौगपद्येऽपि मुखे विरोधाभासनाद्विरोधाभासेन बाधितः समुच्चयः। स्वापतत्त्यागयोर्विधेर्व्यक्तत्वेन निषेधस्य चास्फुटतया 'गूढाक्षेपो विधौ व्यक्ते निषेधे वाऽस्फुटे सति' इति प्राचीनलक्षितगूढाक्षेपस्वीकारस्तु, ताद्दशविवक्षाविरहान्नैव नव्यसम्मतः ॥६॥

प्रगल्भासब्रह्मचारिण्या मध्याया धीरादिभेदाल्लाघवात् सहैव परस्तान्निरूपयिष्यंस्तावत् प्रगल्भां लक्षयति—

पतिमात्रविषयककेलिकलाकलापकोविदा प्रगल्भा ।

पतिमात्रविषयके पतिविषयके पत्यतिरिक्ताविषयके, केलिकला-कलापे निधुवनविलासव्यतिकरे, कोविदा विदुषी (प्रवीणा), प्रगल्भेति लक्ष्यनिर्देशः, सम्बन्ध्यर्थको विषयशब्दः। तथा च 'लब्ध्वा पतिं प्रगल्भा स्यात्समस्तरतकोविदा । आक्रान्तनायका बाढं विराज-द्विभ्रमा' इति शृङ्गारतिलकम्, 'कोविदो विद्वान्' इत्यमरश्च ।

अथ पत्यतिरिक्तसम्बन्धिकेलिकलाकलापाप्रावीण्ये सति केलि-कलाकलापप्रावीण्यं प्रगल्भात्वमिति लक्षणमवसितम् । उत्तरदले केलौ पतिसम्बन्धस्त्वर्थत एव लभ्यः ।

पतिमात्रपदयोः कृत्यं दर्शयन् परीक्षते—

वेश्यायां कुलटायां च पतिमात्रविषयत्वाभावान्नातिव्याप्तिः ।

विशिष्टाभावस्य विशेषणाभावप्रयोज्यतया वेश्यायां सामान्यायां पत्यभावात्, कुलटायां परकीयायां केलिकलायाः पतिमात्रविषयत्वा-भावात् पतिमात्रविषयत्वस्य (लक्षणया) पतिमात्रसम्बन्धिकेलि-कलाकलापप्रावीण्यस्याभाव इति नैवोत्तरदलमात्रसमन्वयप्राप्ता तयोरतिव्याप्तिः ।

प्रगल्भायाश्चेष्टामुखेन भेदद्वयं वदति—

अस्याश्चेष्टा रतिप्रीतिरानन्दात्सम्मोहः ।

रतौ सम्भोगे प्रीतिरानन्दः, आनन्दात्सम्मोहो विक्षिप्तता (चित्तस्य मूढता) अस्याः प्रगल्भायाश्चेष्टाधर्मः । तथा च 'मोहो विचित्तता' इति दर्पणः, (मोहश्चित्तस्य मूढता) इति रसार्णवश्च । इह भेदद्वयमितिशब्दमध्याहृत्य प्रीतिसम्मोहपदयोस्तदाश्रययोर्लक्षणा धर्मिपरत्वसिद्धयेऽवश्यं स्वीकार्या । धर्मपरत्वे त्वितरनायिकासम्ब-न्धिशीलसंरक्षणादिधर्माणामेतद्वत् पृथगुदाहरणादानान्न्यूनता स्यात् ।

रतिप्रीतिमतीमुदाहरति—

प्रथमा यथा ।

कविः सखी वा कथयति ।

संस्पृश्य स्तनमाकलय्य वदनं संश्लिष्य कण्ठस्थलं

निष्पीयाधरबिम्बमम्बरमपाकृष्य व्युदस्यालकम् ।
देवस्याम्बुजिनीपतेः समुदयं जिज्ञासमाने प्रिये
वामाक्षी वसनाञ्चलैः श्रवणयोर्नीलोत्पलं निह्नुते ॥ १० ॥

प्रिये कान्ते, (प्रेयस्याः) स्तनं संस्पृश्य सम्यङ्मर्दयित्वा (विततं वा कृत्वा) वदनं मुखमाकलय्य चुम्बितुं स्वमुखेन संयोज्य, कण्ठस्थलं गलप्रदेशं संश्लिष्य गाढमालिङ्ग्य, अधरबिम्बं बिम्बिकाफलोपममधरोष्ठं निपीय निःशेषेण पीत्वा (चूषित्वा), अम्बरं परिधानीयवासः (शाटकम्) अपाकृष्यापहृत्य (मोचयित्वा), अलकं चूर्णकुन्तलपाशं व्युदस्योत्क्षिप्य (उन्मोच्य), देवस्य भगवतः, अम्बुजिन्याः कमलिन्याः पत्युः सूर्य्यस्य, समुदयं सम्यक्प्राकट्यं, (सुप्रकाशम्) जिज्ञासमाने ज्ञातुमिच्छति, (यतमाने) सति, वामाक्षी सुलोचना (वक्रेक्षणा वा नायिका), वसनाञ्चलैर्वस्त्रान्तैः, श्रवणयोः कर्णयोः (सम्बन्धि), नीलोत्पलं नीलकमलं, निह्नुते (आच्छादयति) अपलपतीत्यर्थः। 'न दिवा मैथुनं कुर्य्यात्' इति स्मृतेः सूर्य्योदये विकासशीलं कमलमालोक्य दिवा मत्वा प्रियः परमेष्टादपि सम्भोगाद्विरमेदिति दुस्सहां क्षतिं सम्भाव्य सूर्य्योदयज्ञापकं विकसत्कमलमाच्छादयतीति तात्पर्य्यम्। तथा च 'स्पर्शो रुजायां दाने च' 'बिम्बं फले बिम्बिकायाः' 'अम्बरं वाससि व्योम्नि' इति विश्वः, 'अलका कुबरपुर्य्यां स्यादस्त्रियां चूर्णकुन्तले' इति मेदिनी, 'वामस्तु वक्रे रम्ये' इति शब्दार्णवः, 'पटः प्रोतोऽञ्चलोऽस्यान्तः' इति हैमः, 'समुद्गमे समुदयः' इति शाश्वतः, 'अपलापस्तु निह्नवः' इत्यमरश्च। अत्र समासपर्शस्य निर्दयत्वं तेन रागातिरेकः, एकवचनेन स्तनस्य पीनता, वदनाकलनेन प्रीत्यतिशयः, स्थलपदेनागत्याऽऽश्लेषस्य दाढर्य्यम्, बिम्बपदेन निसर्गरक्तता, निराऽधरपानस्य पौनःपुन्यम्, अम्बरपदेन स्फीतिमादि, तदेकत्वबोधिनैकवचनेन अपाविरहः, तेन रतिप्रीतिः (लक्षणम्), अलकपदेन कामनीयकम्, एकवचनेन बन्धनविशेषः, देवपदेन प्रतीक्ष्यत्वम्, अम्बुजिनीपतिपदेन क्रीडारसिकत्वम्, जिज्ञासापदेन तात्कालिकसुरतानिवृत्तिद्वाराऽऽसक्त्यतिशयः, शानचा जिज्ञासानिह्नवयोः समकालिक-

त्वेन नायिकायां झटिति पराशयवेदितादाक्ष्यं च, प्रियपदेन परिकरतया रतिदातृत्वम्, वामाक्षीपदेन स्वतो वक्रेक्षणायाः अतिगतविकसत्कमलदिदृक्षया तथा दर्शनौचिती सुरतसौहित्येन प्रिये विभ्रमविशेषः, स्वोयनियतसुन्दराक्षणः प्रतीपतया, क्षणिकसौन्दर्य्येणातुल्यतया वा नीलकमलपिधानौचित्यं च, नीलकमलस्य हस्ताद्यपिधेयत्वं बोधयता वसनशब्देन, बहुप्रयासपिधेयत्वमुपस्थापयता बहुवचनेन चातिविकासः, तेन स्फुरत्सूर्य्योदयज्ञापकतयाऽवश्यपिधेयत्वम्, श्रवणशब्देन सन्निहितवृत्तित्वद्वाराऽऽत्मीयत्वम् द्विवचनेनैकस्यैव कमलस्य पर्य्यायेणोभयभूषणत्वम्, ताभ्यां प्रियत्वम्, नीलशब्देन गौरगण्डसन्निधौ शोभनतमत्वान्नीलस्यैव कमलस्यौचित्यं च सूच्यते। निःपीयेति पानार्थकात्पीङ्धातोरेव ल्यपि न तु पिबतेः। तस्य 'न ल्यपि' इतीत्वनिषेधात्। जिज्ञासमान इति 'ज्ञाश्रुस्मृदृशां सनः' इत्यात्मनेपदे रूपम्।

यत्तु पूर्वार्धेन—

ऊरुकलिततदीयश्रोणिरम्योपरिष्टाद् व्रजति यदिह नारीस्रस्तकेशोत्तरीया।
करजदशनकृत्यं चुम्बनं वा विचित्रं कथयति 'जघनोपश्लेष' मेतन्मुनीन्द्रः॥

इति लक्षितं जघनोपश्लेषाख्यमालिङ्गनमुक्तमिति। तन्न, तस्य पुरुषायितत्वेन नायिकाकर्तव्यत्वोक्तेः, प्रकृते नायककर्तृत्वावगमात्। किन्तु—

अभिमुखमुपविष्टा योषिदङ्केऽथ तल्पे रचितरुचिरगाढालिङ्गनोवक्षभक्ष।
प्रसरदसमरागावेशनश्यद्विचारौ विशत इव मिथोऽङ्गं क्षीरनीरं तदाहुः॥

इति रतिरहस्योक्तं क्षीरनीराख्यमेव। ननु ल्यबन्तक्रियापदैकस्यान्तरतस्योत्कण्ठाजनकत्वेन—

मोहन नारभे*त्तावद्यावन्नोत्कण्ठिता प्रिया।
अन्यथा न सुखोत्पत्तिरशीतेर्कंकरा इव॥

इत्युक्तेः पूर्वाङ्गमालिङ्गनादि बाह्यरतम्।

आदौ रतं बाह्यमिह प्रयोज्यं तत्रापि चालिङ्गनपूर्वमेतत्।

इति रतिरहस्योक्त्या सुरतात्प्रागेव प्रयोज्यम्। इह तु ततः स्तनमर्दनाधरपानाभ्यां च परस्तात्तदुपन्यस्तमिति वात्स्यायनतन्त्रविरोधाद्विधाविरुद्धत्वदोष इति चेत्, मैवम्, पद्येऽस्मिन् प्राचीनसुरत-

* अनुदात्तेत्वलक्षणस्यात्मनेपदस्यानित्यत्वादयं प्रयोगः।

स्यानुल्लेखात्स्तनमर्द्दनादीनामप्यालिङ्गनरूपत्वाच्च। कथंचिदुल्लेखाङ्गीकृतावप्येतन्नायिकायाः प्रगल्भात्वेन 'बाला घना बाह्यरतोपचर्य्या, प्रौढ़ा श्लथाभ्यन्तरमोहनेच्छुः।' इति रतिरहस्य एव दर्शनादस्यां तस्यैवौचित्यात्। यत्तु—

रजनीसुरतेषु पद्मिनी न सुखं याति निसर्गतः क्वचित्।
दिवसे शिशुयोगतोऽपि सा विकसत्यम्बुजिनी यथा रवेः॥

इत्युक्तेः प्रकृतनायिकायाः पद्मिनीत्वेन दिवससुरतस्य सुखातिशयजनकत्वादेव सूर्य्योदयं प्रतीक्षमाणे दयिते, सूर्य्योदयं ज्ञात्वा कदाचिदयं दिवादोषश्रवणात् सुरतान्न विरमेदिति भ्रमान्नायिकाकर्णोत्पलमपलपतीति तात्पर्य्यस्य कल्पनम्, तदसङ्गतमेव; नायिकाया भ्रान्तिकल्पनायां वैदग्ध्यभङ्गप्रसङ्गात्। एवमिह 'नेदं नीलोत्पलम्' अपि तु 'मदक्षिकटाक्षसम्बद्धा वसनच्छटा' इत्यादिपदान्तरकल्पनमपि प्रकरणासमन्वयान्नोपयुक्तम्। अधरो बिम्बमिति रूपकेणानुप्राणितम्, नायकाशयं द्रुतमवगत्य नायिकायास्तरसा स्वाभिप्रायप्रकाशाय नीलोत्पलापलपनविधानात् 'सूक्ष्मं पराशयाभिज्ञं तरसाऽऽकूतचेष्टितम्' इति चन्द्रालोकलक्षितं सूक्ष्मम् (तत्प्रभेदो वा) अलङ्कारः। इहोपमानोपमेयभावस्याविवक्षणादौपम्यभित्तिकाया अपह्नुतेः स्वीकारस्तु सर्वथा निर्मूल एव। कथञ्चिद्व्यङ्ग्यत्वाङ्गीकारेऽपि न चमत्कारः॥ १०॥

आनन्दसम्मोहवतीमुदाहर्तुमाह—

द्वितीया यथा।

शिक्षितसुरतप्रकारां शिक्षितमानविधिं वा सखीं प्रति प्रगल्भाया उक्तिः।

नखक्षतमुरःस्थलेऽधरतले रदस्य व्रणं
च्युता बकुलमालिका विगलिता च मुक्तावलिः।
रतान्तसमये मया सकलमेतदालोकितं
स्मृतिः क? च रतिः क? च क? च तवास्ति! शिक्षाविधिः॥११॥

हे आलि सहचरि! उरःस्थले वक्षोदेशे (क्व? कथा कुचयोः), नखानां कामाङ्कुशानाम्, क्षतं व्रणः, अधरस्यानूर्ध्वोष्ठस्य, तलेऽधः-

प्रदेशे ( किमुतोपरि ? ), रदस्य दन्तस्य, व्रणम् अरुः, वकुलस्य सिंह-केसरपुष्पस्य, मालिका स्रक्, च्युता ( आलिङ्गने ) पतिता, च पुनः, मुक्ताऽऽवलिर्मौक्तिकमाला, विगलिता ( सुरतसम्मर्दवशात् ) त्रुटिता पतिता वा, एतदुच्यमानम् ( अपि ) सकलं समस्तम् ( वस्तु ), मया, रतस्य निधुवनस्य, अन्तसमयेऽवस नकाले, ( यतः ) आलोकितं दृष्टम्, ( अतस्तदा सम्मोहनदशायाम् ) स्मृतिः ( तव त्वदीयशिक्षायाश्च ) संस्कारजन्यज्ञानम्, क ? कुत्र ? रतिः ( त्वया शिक्षिता ) केलिः, क ?, च वा, तव शिक्षायाः सुरतविषयकस्य मानविषयकस्य, वोपदेशस्य, विधिर्विधानम्, क ? न कुत्रापीत्यर्थः ।

सखि ! यदि त्वदुपदेशं तदा किञ्चिदस्मरिष्यम् , तदा तमाचरिष्यमेव, किन्तु किं कुर्य्याम्, आन्तररतनिरन्तरानन्दभरनिमग्नान्तःकरणया मया यतो नखक्षतादिबाह्यरतमपि न ज्ञातुं पारितम् , ततः का कथा ? त्वदुपदेशस्मरणस्य, तस्मादेव, नत्वनादरेण नानुष्ठितमिति क्षम्यतामित्याशयः ।

तथा च 'आली सहचरी ज्ञेया' इति क्षपणकः, 'नखः पुनर्भवः कामाङ्कुशः' 'बकुलः सिंहकेसरः' इति त्रिकाण्डशेषः, 'अधरस्तु पुमानोष्ठे हीनेऽनूर्ध्वे च' इति मेदिनी, 'अधः स्वरूपयोरस्त्रीतलम्' 'व्रणोऽस्त्रियामीर्ममरुः' इत्यमरः, 'रदाः । रदनाद्दशनाद्दन्ताः' 'मालाऽऽल्यवलिपङ्क्तयः' इति हैमः, 'पुंश्चल्यां मौक्तिके मुक्ता' इति यादवः, 'माला स्रक्' इति वररुचिः, 'रतिलक्षं निधुवनम्' इति हारावली, 'मूलावबसिते रम्ये समाप्तावन्त इष्यते' इति शब्दार्णवः, 'समस्तं सकलं सर्वम्' इति धनञ्जयश्च ।

इह—

अन्यास्ताः सखि ! योषितः प्रियतमे सर्वाङ्गलग्नेऽपि याः
प्रागल्भ्यं प्रथयन्ति मोहनविधावालम्ब्य धैर्य्यं महत् ।
अस्माकन्तु तदीयपाणिकमलेऽप्युन्मोचयत्यंशुकं
कोऽयं का वयमत्र किं नु सुरतं नैषा स्मृतिर्जायते ॥

इति रुद्रकविदर्शितदिशा—

'रतप्रारम्भकालेऽपि गच्छत्यानन्दमूर्छनाम्' ।

इति शिङ्गभूपालानुशिष्टायां सुरतारम्भानन्दसम्मूर्छनायां शिक्षितपूर्वस्य सुरतप्रकारस्य मानप्रकारस्य वा विस्मृतिः, आलिङ्गनाद्युद्बुद्धसंस्कारसद्यःस्फुरिताभिनवविचित्रकेलिकलाकौशलनिबन्धनैव समवधार्य्या। अन्यथा 'क्वचित्ताम्बूलाक्तः क्वचिदगरुपङ्काङ्कमलिनः' इत्यादिनोदाहृतस्य समस्तरतकोविदत्वस्य, 'स्वामिन् भङ्गुरयालकं सतिलकं भालं विलासिन् कुरु' इत्यादिनोदाहृतस्याक्रान्तनायकत्वस्य च तत्रासामञ्जस्यं स्यात्।

नखक्षतदन्तक्षते क्रमेण मयूरपदकोच्छूनकाख्ये ज्ञेये। तयोर्लक्षणे रतिरहस्ये यथा—

'अङ्गुष्ठजं नखमधो विनिवेश्य कृष्टैः सर्वाङ्गुलीकररुहैरुपरि स्तनस्य॥
यच्चूचुकाभिमुखमेत्य भवन्ति रेखास्तज्ज्ञा मयूरपदकं तदुदाहरन्ति'॥

इति,

'उच्छूनकं दशनवाससि वामगण्डे
स्यात्पीडनात्तदधरोष्ठविशेषयोगात्' इति च।

नखक्षतमिति क्लीबलिङ्गप्रक्रमात् पुँल्लिङ्गनिर्देशप्राप्तप्रक्रमभङ्गनिरासाय 'व्रणोऽस्त्रियाम्' इत्यनुशासनात्प्राचीनप्रयोगोपलब्धेश्च व्रणमिति क्लीबनिर्देशेऽपि नाप्रयुक्तत्वदोषः।

अत्रालीत्वेन सर्वदा सहचरणात्प्रणयोत्कर्षेण रहस्यकथनौचित्यम् तदुपदिष्टाकरणेऽपि कोपायोग्यता च, क्षतपदेन पीडाजननयोग्यता, ततस्तथापि तदा तदज्ञानात्सम्मोहस्य गाढत्वम्, एकवचनेनैकवद्भासनात्क्षतस्य घनत्वम्, स्थलशब्देन च व्यापकत्वम्, ताभ्यां पूर्ववत्सम्मोहसान्द्रत्वम्, तलशब्देनाधरोर्ध्वदेशापेक्षया तस्य कार्कश्येन तद्देशस्य पीडाप्रदत्वेऽप्यविभावनात्तदेव, विलेखनार्थकरदधातुनिष्पन्नरदशब्देन 'वृणोति यस्माद्रूढेऽपि' इति सुश्रुतनिरुक्तेन व्रणपदेन चाधरतवद्व्यथाजनकत्वम्, ततोऽपि तदेव, बकुलमालाच्यवनेन सुरतवैविध्यम्, सुरभितमवस्त्वपगमे विभावनयोग्यतायामप्यविभावनाच्च तदेव, मुक्तावलीविगलनेन गाढालिङ्गनम्, शीतलवस्तुव्यपगमेऽप्यविभावनादपि तदेव पूर्ववत्, शिक्षापदेनावश्याचरणीयत्वं च व्यज्यते। कामिनीमात्रवृत्तिनखक्षतादिस्वरूपवर्णनात्

स्वभावोक्त्या सङ्कीर्णा, स्वदेहस्थनखक्षतादेरध्यज्ञाने सखीवाक्यास्मरणस्यार्थादापन्नतया 'दण्डापूपिकया यत्स्यादेवार्थान्तरावपतनम्। अर्थापत्तिरियम्' इति विद्याधरलक्षितार्थापत्तिरलङ्कारः॥ ११॥

अथ मध्याप्रगल्भयोर्मानावस्थायां धैर्याधैर्यनिबन्धनान् धर्मान् वदति—

मध्याप्रगल्भे प्रत्येकं मानावस्थायां त्रिविधा।

मध्या तथा प्रगल्भा, मानस्य वक्ष्यमाणलक्षणस्य, अवस्थायां स्थितौ (तत् प्राधान्येन न त्वन्यदा) त्रिकारा। तानेव प्रकारान् दर्शयति—

धीरा, अधीरा, धीराधीरा चेति।

'स्थिरा चित्तोन्नतिर्यातु, तद्धैर्यमिति सञ्ज्ञितम्' इति रसार्णवलक्षिता स्थिरा चित्तोन्नतिरेव धैर्यं तद्वती धीरा तद्विपरीतधर्मवत्यधीरा, तदुभयधर्मवती धीराधीरा। विरोधिनोरपि धैर्याधैर्ययोरेकाधिकरणवृत्तिता तु स्वप्रयोज्ययत्किञ्चित्कोपव्यञ्जकसाक्षात्कोपप्रकाशकव्यापारयोर्भरतादिसम्मतसमावेशाद्‌वगन्तव्या।

मध्याप्रगल्भयोर्धीरयोः प्रथमं साधारणं लक्षणं कथयति—

व्यङ्ग्यकोपप्रकाशा धीरा।

व्यङ्ग्यो व्यञ्जनाख्यालङ्कारिकाद्यङ्गीकृततुरीयवृत्तिप्रयोज्यबोधविषयो, लिङ्गविशेषा*नुमेयो वा कोपस्य ( परोपभोगाकलनजन्यस्य, प्रियविषयस्य ) प्रकाशः प्रादुर्भावो यस्याः सा धीरा। प्रकाशस्य तेजोमात्रवृत्तितया कोपे बाधात् कोपोत्कट्यव्यञ्जनाय प्रादुर्भावे लक्षणा।

अधीरां लक्षयति—

अव्यङ्ग्यकोपप्रकाशाऽधीरा।

साक्षाल्लक्ष्योऽव्यङ्ग्यः।

धीराधीरां लक्षयति—

व्यङ्ग्याव्यङ्ग्यकोपप्रकाशाधीराधीरा।

स्पष्टम्।

धीराधीरयोर्मध्याप्रगल्भयोर्वैधर्म्यमाह—

---

* तत्रापि व्यञ्जनैव प्रसरतीति मदीयव्यञ्जनप्रदीपे व्यक्तम्।

इयांस्तु विशेषः ।

इयानेतावान्, विशेषो भेदः ।

पूर्व मध्याया विशेषं दर्शयति—

मध्याया धीरायाः कोपस्य गीर्व्यञ्जिका । अधीरायाः परुष-वाक् । धीराधीरायाश्च वचनरुदिते कोपस्य प्रकाशके ।

गीर्वक्रोक्तिः, सा च चेष्टादेरप्युपलक्षिका, ततोऽपि क्वचित् कोप-प्रकाशात् । एवं परुषवाग् रुदितमुपलक्षयति । तथा वचनं प्राग्वच्चेष्टादेः, रुदितञ्च परुषवाचोऽप्युपलक्षणम् । तथा च मध्यालक्षणे ( उक्तपूर्वे ) व्यङ्ग्यमात्रकोपप्रादुर्भाववत्त्वं निवेश्य धीरमध्यायाः, रुदितकठोरवचन-साक्षाद्बोध्यकोपप्रादुर्भाववत्त्वं निवेश्याधीरमध्यायाः, कोपप्रादुर्भावव्य-ञ्जकवाक्चेष्टादिमत्त्वे सति कोपप्रादुर्भावसाक्षाद्बोधकरुदितपरुषवाग्वत्त्वं निवेश्य च धीराधीरमध्याया लक्षणं विधेयम् । मात्रपदनिवेशादधीर-मध्याया व्यवच्छेदः । परकीयादेर्धीरादिभेदानङ्गीकारे तु पतिमात्रानुर-क्तत्वमपि निवेश्य परकीयादिव्युदासः करणीयः ।

प्रगल्भाया विशेषमाह—

प्रगल्भाया धीरायाश्च रतौदास्यम् । अधीरायास्तर्जनताड-नादि । धीराधीराया रतौदास्यं तर्जनताडनादि च, कोपप्रकाशकम् ।

कोपप्रकाशकमिति रतौदास्याद्युद्देश्येऽप्यन्वेति । प्रगल्भात्वेऽपि रते ( सुरते ) औदास्यं ( ताटस्थ्यमनौत्सुक्यमिति यावत् । तदीय कोपोदयं व्यनक्ति । तथा च प्रगल्भालक्षणेपूर्वंवत्तत्तद्धर्म्मानिवेश्यासां लक्षणानि बोध्यानि । स्वीयालक्षणसमावेशोपि यथापूर्वमवसेयः ।

कश्चित्परकीयादावपि धीरादिलक्षणाकलनादिह प्राचीनकृतस्वीया-लक्षणसन्निवेशमसहमानो नवीन आक्षिपति—

धीरादिभेदः स्वीयायामेव, न परकीयायामिति प्राचीनलेख-नमाज्ञामात्रम् ।

आज्ञामात्रं, न युक्तियुक्तम्, तावता नाङ्गीकार्य्यमिति भावः ।

तत्र हेतुमुपन्यस्यति—

धीरत्वमधीरत्वं तदुभयं वा माननियतम्। परकीयायां मानश्चेत् तेषामावश्यकत्वात्* ।

वाशब्दः समुच्चये। मानस्य नियतं समनियतं व्यापकं व्याप्यं च। तेषां धीरत्वादीनाम्। समनियतस्य मानस्य परकीयायां सत्त्वेऽनायत्या धीरत्वादिसत्त्वमपि, स्वीकार्य्यमेवेत्याशयः।

ननु धीरत्वादिसत्त्वसाधनभूतस्य मानस्यैव परकीयायां तावन्न सिद्धिरित्याशङ्कां निराकरोति—

मानश्च न परकीयायामिति वक्तुमशक्यत्वादिति ।

द्वितीयेतिशब्दो हेतुसमाप्तिबोधकः। कार्य्यस्य कारणकूटव्यापकतया परकीयायामपि दयितापराधावधारणादिसामग्री समवाये कार्य्यस्य मानस्योत्पत्तिं कः प्रतिबध्नीयादिति तात्पर्य्यम्।

अथ कन्याया अपि परकीयात्वेन तत्तुल्यन्यायेन स्वीयाया मुग्धाया अपि, मानाङ्गीकारेऽगत्या तत्समनियतधीरत्वादेरप्यङ्गीकृतिरिति, प्रकृते तद्भेदानुदाहरणाभ्यूनत्वं तु न शङ्कनीयम्, कन्यायामवस्थाविशेषानुल्लेखान्मानसम्भवेऽपि मुग्धायान्त्ववस्थाविशेषोपादानाल्लज्जाभयपरतन्त्ररतिकत्वेन मानासम्भवात्तत्समनियतधीरत्वाद्यानुल्लेखेऽपि न्यूनत्वाभावात्। ज्ञातयौवनमुग्धायां तु मानः सम्भवतीति तद्भेदानुदाहरणाभ्यूनताऽस्त्येवेति केचित्। वयन्तु तदीयरतेरतितरां त्रपाभीतिभ्यां निगूहनाद्धीरत्वमात्रधर्मः कथंचित्सम्भवन्नपि न चमत्कारीति प्राचीनैरुपेक्षितः, तस्मात्तदनुक्तिर्न दोष इति विभावयामः।

धीरमध्यामुदाहर्तुमुपक्रमते—

मध्या धीरा यथा ।

सद्यः सम्भुक्तपराङ्गनमुपागतं दयितं प्रति कस्याश्चिद्वक्रोक्तिः।

---

*नञ्तत्पुरुषादवश्यशब्दात् 'ननञ्पूर्वात्तत्पुरुषात् ५।१।१२१' इत्यादिसूत्रेण निषिद्धत्वात् 'योपधाद्गुरूपोत्तमाद्वुञ् ५।१।१३२ इति सूत्रविहितो वुञ्, तस्य भावार्थकत्वेन तदन्तात्तल् च न स्यात्। बहुव्रीहावपि तलोऽप्राप्तिरेवेति स्वार्थकान्तादवश्यशब्दात्स्वार्थेऽण् ततस्तलि रूपमिदम्।

लोलालिपुञ्जे व्रजतो निकुञ्जे स्फारा बभूवुः श्रमवारिधाराः।
देहे समीहे भवतो विधातुं धीरं समीरं नलिनीदले न ॥१२॥

लोलालिपुञ्जे लोलः (भवद्भ्रमनादिक्रिया) चलः अलीनां द्विरेफाणां पुञ्ज उत्करो यत्र तादृशे चलाचलभ्रमरनिकरे, यद्वा हे लोल! (मयि स्वाधीनायामपि) सन्ततपराङ्गनासङ्गमसतृष्ण! अलीनां भ्रमराणाम्, आलीनां सखीनां लक्षणलक्षणया प्रतिकूलकारित्वादसखीनां वा पुञ्जो यत्र, यद्वा लोलस्त्वत्समागमलोलुप आलीनां पुञ्जो यत्र, यद्वा लोलस्त्वदालोकनोत्सुकः, अलीनां नीलिमादिसादृश्यात्कामिनीनिचयलोचनानां पुञ्जो यत्र, यद्वाऽलीनां पुञ्जे गौणलक्षणया तदुपमे ध्वान्तमये, यद्वा लोलः शृङ्गारविभ्रमेण चलः अलीनां कामिनीचक्षुषां पुञ्जो यत्र, तत्र निकुञ्जे लतादिपिहिताभ्यन्तरप्रदेशे। वस्तुतो विततविलुलितनीलकचकलापाच्छादितकामुकीनिचये, व्रजतः (भ्रमर भीत्या शीघ्रम्) गच्छतः (वस्तुतः सुरतायासं कुर्वतः) भवतः, श्रमेण भ्रमरनिवारणद्रुतगत्योरायासेन (जनितस्य) वारिणो घर्मस्य धारा वेण्यः, स्फारा विकटाः (भूयस्यः) (यस्मात्) बभूवुः, (तस्मात्) देहे (भवतः) वपुषि, नलिन्याः पद्मिन्याः, दलेन पत्रेण, धीरं मन्दम्, समीरं पवनम्, विधातुं प्रवर्तयितुम्, समीहे वाञ्छामीत्यर्थः।

नायं निकुञ्जद्रुतगमनभ्रमरनिवारणश्रमजन्यः स्वेदप्रवाहः तत्र शीतलघनच्छायासद्भावेन द्रुतं श्रमापनयनसम्भवात्। अपि तु कामिनीनिकरनिकामकामसमरसम्भूत एव। अन्यथैवं घर्मप्रवाहो न स्यादिति ज्ञातं मया सकलं भवच्चरितम्। अथ ज्ञातापराधाऽप्यहं सहजस्नेहाद्भवतः श्रमस्वेदापाकरणाय नलिनीदलेन वीजनं वाञ्छामीति दृश्यतां स्वीयमाचरितं मम च सौजन्यमिति नायिकावक्रोक्तेर्भावः।

तथा च 'लोलश्चलसतृष्णयोः' 'नलिनीपद्मिनी' इति विश्वप्रकाशः, 'इन्दिन्दिरोऽलिरोलम्बो द्विरेफः' इति हेमचन्द्रः, 'निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे' 'स्पृहेहा तृड्वाञ्छा' 'पुञ्जराशी तूत्करः' इत्यमरसिंहः, 'स्फारः स्यात्पुंसि विकटे' इति मेदिनीकारः, 'धारा वेणी रयश्च सः' इति कोशसारः, 'धीरः पण्डितमन्दयोः' इति धरणिधरश्च।

अत्र वायोर्विधानस्य कथनेऽपि करणस्य नलिनीदलस्योपादानाभावादश्लीलत्वम्। यत्तत्पदयोरनुल्लेखेऽपि 'ये नाम केचिदिह नः प्रथयन्त्यवज्ञाम्' इत्यादिवत्प्रतीतेरनवरोधान्नैव न्यूनपदत्वं च।

इह सम्बोधनपदानुक्त्या तेन सहालपनस्याप्यनौचित्यं ततो नीचाचरणं तेन कोपः, लोलेति सम्बोधनपदेऽपि 'स्वाधीनेऽपि कलत्रे नीचः परदारलम्पटो भवति। सम्पूर्णेऽपि तडागे काकः कुम्भोदकं पिबति' इत्युक्तेर्नीचत्वासमीक्ष्यकारित्वगुणानभिज्ञत्वमुखेन कोप एव, लोलत्वस्य भ्रमरपुञ्जविशेषणत्वे तु भ्रमरपुञ्जस्य लोलत्वेन भीतिः, नायकाङ्गवृत्तिनवीनसुरभिजिघ्रासा वा, ताभ्यां क्रमेण नायकस्य तत्र गतिर्विचित्रसौरभवत्ता च, पुञ्जपदेन निकुञ्जस्य सन्ततसमाच्छन्नत्वम्, ततोऽन्यावलोकनभीत्यभावेन निःशङ्कं स्मरसङ्गरप्रवर्तनात्परिश्रमातिशयः, सन्तापाभावेन श्रमान्तरासम्भवश्च, तत्र स्वीयामर्षः श्रमशब्देन स्वेदोदयस्य तपत्तरुणतरणिकिरणसम्पर्काद्यजन्यत्वम्, तथा च सुरतपत्त एव निर्णयः, धारापदबहुवचनाभ्यामसकृत्कराभ्यां प्रोञ्छनेऽप्यविरलप्रवृत्तिः, स्फारपदेन धाराया अपह्नवानर्हत्वम्, नलिनीदलजन्यत्वेन समीरस्य सौरभशैत्ये, सम्यगीरयतीति व्युत्पत्तिमता समीरशब्देन धीरत्वेन च वायोः सुरतश्रमापनयनक्षमत्वम्, वक्रोक्त्या प्रकृतनायिकाया धीरत्वं च यथायोगमर्थशक्त्युद्भवं शब्दशक्त्युद्भवञ्च वस्तु 'प्रौढोक्तिमात्रनिष्पन्नशरीरः सम्भवी स्वतः। अर्थोऽपि द्विविधो ज्ञेयो वस्तुनोऽन्यस्य दीपकः' इति ध्वनिकारानुमतेन कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन वस्तुना व्यज्यते। लोलालिपुञ्जपदेन नायकविलोकनविलोलविलोचनललनासमूहवत्त्वं तु न व्यङ्ग्यम्, *प्रागुक्तरीत्या तस्य वाच्यत्वात्। सभ्रमरनिकुञ्जगमनमात्रेण तावतः स्वेदोद्गमस्यासम्भव इति बाधस्य गृहीतपूर्वत्वे 'साहेन्तो सहि! सुहअम्' इत्यादाविव प्रदीपकृत्सम्मतो लक्षणमूलध्वनिरेवात्र। अगृहीतपूर्वत्वे तु 'निःशेषच्युतचन्दनं स्तनतटम्' इत्यादाविव जगन्नाथोक्तरीत्या न सः, किन्त्वन्य एव। एवमिह वक्रोक्त्यलङ्कारेण वस्तुध्वनिरित्युक्तिरपि न

---

* प्रकरणेनाभिधानियमनात्तस्य वाच्यत्वमेव।

युक्ता, 'यदुक्तमन्यथा वाक्यमन्यथाऽन्येन योज्यते । श्लेषेण काक्वा वा ज्ञेया सा वक्रोक्तिः' इति मम्मटोक्त्या परोक्तेरन्यथा योजन एव तत्स्थापनात् प्रकृतवक्रोक्तेरनलङ्कारत्वात् ।

किन्तु 'श्लोकस्यार्धे तदर्धे वा वर्णावृत्तिर्यदि ध्रुवा । तदा मता मतिमतां स्फुटानुप्रासता सताम्' इति जयदेवलक्षितस्फुटानुप्रासेन, 'मन्दं हसन्तः पुलकं वहन्तः' इत्यादाविव विश्वनाथाङ्गीकृतान्त्यानुप्रासेन वाऽङ्गाङ्गिभावाविरहणात्संसृष्टः ( न तु सङ्कीर्णः ) 'विशेषणैर्यत्साकूतैरुक्तिः परिकरस्तु सः' इति प्रकाशलक्षितः परिकरोऽलङ्कारः । 'स्यादिन्द्रवज्रा यदि तौ जगौ गः' इति वृत्तरत्नाकरोक्तलक्षणेन्द्रवज्रा छन्दश्च ॥ १२ ॥

अधीरमध्यामुदाहर्तुमुपन्यस्यति—

मध्याऽधीरा यथा ।

सद्यः पराङ्गनासम्भोगेनापराधिनं समुपागतं कान्तं काचित् परुषं वदति ।

जातस्ते निशि जागरो, मम पुनर्नेत्राम्बुजे *शोणिमा,
निष्पीतं भवता मधु प्रवितितं, व्याघूर्णितं मे मनः ।
भ्राम्यद्भृङ्गघने निकुञ्जभवने लब्धं त्वया †श्रीफलं,
पञ्चेषुः पुनरेव मां हुतवहक्रूरैः शरैः कृन्तति ॥ १३ ॥

ते तव, निशि रजन्याम्, जागरो जागरणम् ( निरन्तरक्रीडाऽऽरम्भेण निद्राभङ्गः ), जातोऽभूत्, मम पुनः ( न तु तवेति चित्रम् ) नेत्राम्बुजे नयनकमले, शोणिमा ( जागरजन्यः, वस्तुतो रोषजः ) रागः ( लौहित्यम् ), भवता प्रवितितं बहुलम् ( अनन्यास्वादितत्वादक्लिष्टम्, अन्यास्वादेऽपि यथेच्छं वा ), मधु मद्यम् ( प्रियाऽधरामृतम् ) निष्पीतं निःशेषेण पीतम्, मे, मनः स्वान्तम्, ( पुनः ) व्याघूर्णितं

*शोणशब्दाद्रक्तवर्णवाचकात् 'वर्णदृढादिभ्यः ष्यञ् च' इति सूत्रविहित इमनिच् ।
†श्रीफलस्य ( बिल्ववृक्षस्य ) अवयवः ( फलम् ) इत्यर्थे 'अवयवे च प्राण्योषधिवृक्षेभ्यः' इति सूत्रविहितस्याणः 'फले लुक्' इति सूत्रेण लुक् ।

( मदेन, वस्तुतस्त्वदपराधावगमेन ) विशेषेण भ्रान्तम् । ( किञ्च ) त्वया, भ्राम्यन्तः प्रचलन्तश्च ते भृङ्गा भ्रमरास्तैर्घने सान्द्रे ( अन्यत्र नीलचललाचनवलिते ) निकुञ्जो लतादिपिहितान्तःप्रदेश एव ( निवासयोग्यत्वात् ) भवनं सदनं तस्मिन् ( परत्र विलुलितकचकलापाच्छादितकामिनीवपुषि ), श्रीफलम् बिल्वफलम् ( अथ च प्रियास्तनः, तथा श्रियः सम्पदः शोभाया वा फलं प्रयोजनम् ), लब्धम् प्राप्तम् । पुनः, माम्, एष मानसप्रत्यक्षविषयः, पञ्चेषुः कन्दर्पः, हुतवहक्रूरैः पावकवद्दारुणैः ( शोषणप्रमुखैः ), शरैर्बाणैः, कृन्तति भिनत्तीत्यर्थः।

अन्यत्र यस्यैव जागरस्तस्यैव नयने रागः, येनैव मद्यं पीयते तस्यैव मनोभ्रमः, येनैव क्वचित्परकीयभवनेऽन्यत्र वा राज्ञऽनिवेदितं निध्यादि वस्तु लभ्यते जाग्रद्यामिकसमक्षं वा मुष्यते, तस्यैव राज्ञा शरादिना दण्डो विधीयत इति कार्य्यकारणयोः सामानाधिकरण्यं प्रसिद्धम्, परमिह तु तद्वैपरीत्यं दृश्यते, त्वदपराधेऽपि ममैव दण्ड इति महच्चित्रमेतत्, तथा च त्वयापलभ्यमानमपि निखिलं त्वच्चरितं मयाऽवगतमित्यधुना वृथैव ते मदनुरञ्जनार्थमन्तिकागमनप्रयास इत्याकूतम् ।

तथा च 'दोषा निशा त्रियामा च रजनी' इति नाममाला, 'जागरणं, जागरा जागरोऽपि च' 'भ्रान्तिर्भ्रमिर्घूर्णिश्च घूर्णने' 'घनं सान्द्रम्' इति हैमः, 'रक्तः, शोणः कोकनदच्छविः' 'पुनरप्रथमे भेदे निर्निश्चयनिषेधयोः' इत्यमरः' 'मधु क्षीरे जले क्षौद्रे, मद्ये' इति विश्वः, 'श्रीफलः पुंसि मालूरे' इति मेदिनी, 'शोभासम्पत्तिपद्मासु लक्ष्मीः 'श्रीरिव दृश्यते' इति शाश्वतः, 'शिलीमुखः शरो बाणः' 'सदनं सद्म भवनम्' इति धनञ्जयश्च ।

इह सम्बोधनानुपादान—युष्मच्छब्दैकवचनैः स्वीयाधीरात्वलक्षकं वाचःपारुष्यं प्रकाशयद्भिर्नायकविषयकः कोपः, तदपराधानां दुस्सहत्वञ्च, निशाजागरेण रतस्य 'रतिपरिचयनश्यन्नैद्रतन्द्रः कथंचिद् गमयति शयनीये शर्वरीं किं करोतु' इति माघोदाहृतो द्राघिमा, पुनश्शब्दैर्नायके नयनशोणिमादेरभावः, तेन च स्वामर्षातिशयः, अम्बुजतादात्म्येन नेत्रस्य कोपजरुदितजलवत्त्वम्, एकवचनेन नायकागमन-

मार्गावलोकनानन्यव्यापारनिरतत्वेनैकरूप्यं च, ततस्तत्रासक्त्यतिशयः, तदनागमनेन रोषः, प्रवितत‌मधुनो निरापानस्य चाधिक्यं द्वारीकृत्य स्वैरविहारस्ततोऽपि कोपः, पञ्चेषुपदेन कामस्य सशस्त्रत्वेन निर्दयत्वम्, निसर्गकोपनत्वं वा, हुतवहसादृश्येन शराणाम् '*अरविन्दमशोकञ्च चूतञ्च नवमल्लिका। नीलोत्पलञ्च पञ्चैते पञ्चबाणस्य सायकाः' इत्युक्तकुसुमात्मकत्वेऽपि, 'सम्मोहनः क्षोभणश्च दहनः शोषणस्तथा। उच्चाटनश्च कामस्य बाणाः पञ्च प्रकीर्तिताः' इत्युक्तपञ्चविधत्वेन बहुवचनवाच्यबहुत्वेन च पीडाऽतिशयजनकत्वं तद्दुःसहत्वं च सूच्यते।

यत्तु भ्राम्यद्भृङ्गघन-निकुञ्जभवन-श्रीफलपदानां प्रकृतानुपयोगाद्वाच्यार्थबाधपुरस्सरं सादृश्यसंसर्गेण क्रीडाविलुलितकचनिचयविलोललोचनकामुकीनिकरकुचकलशरूपार्थान्तरेषु सङ्क्रमणाद्व्यङ्गबोधकत्वेनाविवक्षितवाच्यध्वनेः 'अर्थान्तरं सङ्क्रमिते वाच्येऽत्यन्तं तिरस्कृते। अविवक्षितवाच्योऽपि ध्वनिर्द्वैविध्यमृच्छति' इति ध्वनिकृदुक्तः प्रथमो भेद इति। तन्न सूक्ष्मविचारसहम्, 'कदली कदली करभः करभः' इत्यादाविवार्थान्तरान्वितवाच्यार्थप्रकाश एव ध्वनेः स्वीकारात्। इह तु भ्राम्यद्भृङ्गादिपदानां विचित्रविभ्रमसौन्दर्यातिशयस्पृहणीयतमत्वव्यञ्जनाय तादृशललनाकुचकलशयोर्लक्षणलक्षणा, न तु व्यङ्ग्येन वाच्यार्थक्रोडीकरणमिति 'निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते' इत्यत्रेवात्यन्ततिरस्कृतवाच्यध्वनिरेव। एवं मधुपानेऽन्यया सहेत्यर्थाक्षेपे, साहित्येन तदधरपानरूपस्य चमत्कारिणोऽर्थस्य विच्छेदः। प्रथमचरमयोस्ते त्वयेतियुष्मच्छब्दयोर्मध्ये भवच्छब्दोपादानेऽपि कुपिताया उक्तावसङ्गतेः कोपातिशयद्योतकत्वादानुकूल्यमेवेति नेह भग्नप्रक्रमत्वम्।

आगरादिप्रसिद्धकारणाभावेऽपि नायिकायां नेत्रशोणिमादिकार्य्यनिबन्धनात् 'असति प्रसिद्धहेतौ कार्य्योत्पत्तिर्विभावना' इत्येकावलीलक्षितविभावनया, नायके तु तत्तत्कारणसमवधानेऽपि कार्यानुदयाद्विशेषोक्त्या च भित्तिरूपया नेत्रस्याम्बुजत्वेन रूपणाद्रूपकेण, शरेषु

* अनयोरपि द्वयोः पुष्परूपेऽवयवेऽणो लुक्।

हुतवहसादृश्येनोपमया चानुप्राणितया 'विस्पष्टे समकालं कारणमन्यत्र कार्य्यमन्यत्र। यस्यामुपलभ्येते विज्ञेयाऽसङ्गतिः सेयम्' इति रुद्रटलक्षितया कविनिबद्धवक्त्रोप्रौढोक्तिसिद्धयाऽसङ्गत्यैव (अलङ्कारेण) प्रियापराधजकोपस्वरूपं वस्तु व्यज्यते, न तु विरोधालङ्कारेण। तस्य तु 'विरुद्धानां पदार्थानां यत्र संसर्गदर्शनम्। विशेषदर्शनायैव स विरोधः स्मृतः' इति दण्डिना लक्षितत्वाद्विरुद्धयोः कार्य्यकारणयोः प्रकृतेऽनिबन्धनान्न सम्भवः। किन्तु जागरादिकारणानां नेत्रशोणिमादिकार्य्याणाञ्च वैयधिकरण्येनोपन्यासादसङ्गतिरेवेति विभावयामः ॥ १३ ॥

धीराधीरमध्यामुदाहर्तुमाह—

मध्या धीराधीरा यथा।

सापराधं प्रियं काचिद्वक्रोक्त्या तर्जयति।

कान्तानुरागचतुरोऽसि मनोहरोऽसि<br>
नाथोऽसि किञ्च नवयौवनभूषितोऽसि।<br>
इत्थं निगद्य सुदृशा वदने प्रियस्य<br>
निःश्वस्य बाष्पलुलिता निहिता दृगन्ताः ॥ १४ ॥

(त्वम्) कान्ता (केवलं रूपरामणीयकेन न तु निष्कपटप्रणयेन) प्रेयसी, तस्यास्तस्यां (तद्विषयकः, न तु धर्मपत्नीविषयकः) वा, यः, अनुरागोऽनुरञ्जनम् (उपचारः प्रणयश्च) तत्र (अभिलषितकामिनीवशीकरणव्यापारे), चतुरः पटुः, असि वर्तसे। यद्वा हे कान्त! (मया) कमनीय! अनुरागे (नानाऽपराधं कृत्वाऽपि विविध-चाटुपूर्वकचरणपतनादिभिः, मम) अनुरञ्जने चतुरोऽसि। यद्वा कान्तानां योषिद्विशेषाणाम्, अनुरागे प्रणये स्वविषयकानुरागजनने वा चतुरोऽसि। यद्वा कान्तानुरागस्य चतुरोऽभिज्ञः, असि (अत्र नासीति-काकुः), तथा मनसश्चेतसः, (रूपवचनाचरणविलासैः) हरश्चौरः, असि। तथा नाथः प्रभुः (अधिपतिः), असि। किञ्चैवं नवेन नूतनेन यौवनेन तारुण्येन, भूषितोऽलङ्कृतः, असि, इत्थममुना प्रकारेण, सुदृशा वामाक्ष्या (नायिकया), निगद्योक्त्वा, (तथा) निःश्वस्य निःश्वासमुत्सृज्य, प्रियस्य पत्युः, वदने मुखे, बाष्पैरश्रुभिः, लुलितास्तरलिताः,

दृगन्ताः कटाक्षाः, (न तु सम्पूर्णमक्षि), निहिता आरोपिताः (निखाताः) इत्यर्थः।

नवीनप्रयस्यनुरागं दधानोऽपि यन्ममानुरञ्जनार्थमागतोऽसि, तन्मयाऽखिलमवगतम्, किंतु तथाऽपि किं कुर्यां यत्त्वमेव मे प्रभुर्मनोहरश्चासि, ध्रुवमस्य दण्डं दास्यामीति वा, वक्रोक्तेरभिप्रायः।

तथा च 'कान्तस्तु प्रियरम्ययोः' 'नेत्राम्बु बाष्पः' इति त्रिकाण्डशेषः, 'योषिद्विशेषास्तु, कान्ता भीरुर्नितम्बिनी' 'पतीनस्वामिनाथार्याः, प्रभुः' 'कुशलश्चतुरोऽभिज्ञविज्ञवैज्ञानिकाः पटुः' इति हैमः, 'मुखन्तु वदने' इति यादवः, 'तत्त्वज्ञश्चतुरः' इति धनञ्जयः, 'प्रणयेच्छयोः। सारङ्गादौ च रागः स्यादारुण्ये रञ्जने पुमान्' इति शब्दार्णवश्च। अत्रासीति क्रियाया असकृदुपादानेऽपि सम्बन्धिभेदात्प्रतिपाद्यवैजात्यान्नायिकारोषपोषोपस्थापकत्वाच्च न कथितपदत्वम्।

चातुर्येण काक्काऽनुरागानभिज्ञत्वमिति परुषवाक्, तदपराधावधारणेऽपि मनोहरत्वे न स्वीयचेतसोऽवश्यतयाऽशक्यप्रतीकारत्वम्, नाथत्वेनानुचिताचरणेऽप्यपरिहेयत्वमदण्ड्यत्वं च, यौवनस्य नवीनतयाऽत्यन्तोन्मादकत्वमुखेन नेतुरप्रताकार्यत्वम्, भूषितपदेन तावत एव भूषणत्वाद्विद्याविनयादिगुणाभावः, तथा च 'यौवनं धनसम्पत्तिः प्रभुत्वमविवेकिता। एकैकमप्यनर्थाय किमु यत्र चतुष्टयम्' इत्युक्तदिशा दुर्नयातिरेकः, इत्थंपदेन तत्कथनप्रकाराणां विशेषेणापरिच्छेद्यत्वम्, ततस्तच्चेतोवैक्लव्यातिशयः, निना गदनप्रकारभूयस्त्वम्, ततो रोषः, विश्वासबाष्पदृग्विलुलनाभ्यां भूयोभूयः समुत्पत्तिद्वारा प्रतीकाराभावाद्दुःखातिरेकः, निगदननिःश्वसनकटाक्षविक्षेपाणां क्रमिकत्वेन मध्ये व्यापारान्तराननुद्भवेन तदपराधानां दुःसहत्वम्, बहुवचनेन कटाक्षबाहुल्यद्वाराऽसूया, निधानेन तेषां तीक्ष्णतामहत्त्वे, एवं बाणायिततीक्ष्णकटाक्षक्षेपेण सद्यो दण्डविधानाद्धीरात्वं दण्डान्तराकरणाद्धीरात्वं च सूच्यते।

एतदुदाहरणद्वये प्रगल्भान्यूनतर्जनादिविधानेन मुग्धाऽधिकौत्कण्ठ्यप्रकाशेन च लज्जामदनसाम्याभ्मध्यात्वमवसेयं, न तु त्रितयमेव। आपाततः स्तुत्यर्थकस्य पूर्वार्धस्य निन्दायां पर्यवसानात्

'स्तुत्या वा गम्यते निन्दा, निन्दया गम्यते स्तुतिः। व्याजस्तुतिरसौ' इति कृष्णकविलक्षितव्याजस्तुत्या वृत्त्यनुप्रासाभ्यामुल्लासितः परिकरोऽलङ्कारः। तु वक्रोक्तिः, उक्तयुक्तेः ॥ १४ ॥

धीरप्रगल्भामुदाहर्तुमारभते—

प्रौढा धीरा यथा।

कश्चित् कथंचित् स्वापराधजकोपं गोपयन्तीं प्रियाम्, सखी वा दयितापराधजरोषमपलपन्तीमालीं परिहसति।

नो तल्पं भजसे न जल्पसि सुधाधाराऽनुकारा गिरो
दृक्पातं कुरुषे न वा परिजने कोपप्रकाशच्छलात्।
इत्थं केतकगर्भगौरि! दयिते! कोपस्य सङ्गोपनं
तत्स्यादेव, न चेत्पुनः सहचरी कुर्वीत साचि स्मितम् ॥ १५ ॥

हे केतकगर्भगौरि! क्रकचच्छदकुसुमाभ्यन्तरदलपीतवर्णे! दयिते! प्रेयसि! (त्वम्) तल्पं (मदधिष्ठितम्) शयनीयम्, नो नहि (मत्सहवासपरिजिहीर्षया), भजसे आश्रयसि। (तथा) अमृतस्य सुधायाः, धारां वेणीम्, यद्वा सन्ततिम्, यद्वाऽऽधारमाश्रयम् (चन्द्रम्) यद्वाऽऽधारम् (उत्पत्तेः) अधिकरणम् (समुद्रम्), यद्वाऽऽधारं जलसङ्ग्रहस्थानम् (ह्रदादिम्, अप्रतिबद्धमाधुर्य्येण, स्फीतिम्ना, सन्तापध्वंसनेन, गाम्भीर्य्येण च) अनुकुर्वन्ति तुलयन्तीति तथोक्ताः, गिरो वाणीः (मदालापनिराचिकीर्षया) न जल्पसि नैवोच्चारयसि। वा पुनः, परिजने परिवारे (सेवकवर्गे) यः (कृतकस्य) कोपस्य प्रकाशः प्रकटनम्, तस्य च्छलान्मिषात्, (दयिते*ऽपि मयि) दृशो दृष्टेः, पातं यदृच्छयाऽनिच्छया वा प्रक्षेपम्, न कुरुषे (का पुनः कथा? ससम्भ्रमालिङ्गनादेनाम्)। इत्थमेवम्, (मद्विषयस्य) कोपस्य सङ्गोपनं सम्यङ्निगूहनम्, तदिष्यमाणम्, (तदा) स्यात् (अभविष्यत्) एव, चेद् यदि, सहचरी सततानुगा (सङ्गिनी सखी), साचि तिर्यक् (मुखं कृत्वा), स्मितमीषद्धसितम्, न कुर्वीत

* पक्षेऽस्मिन् दयितपदं क्त्वन्तं सहम्यर्थश्च विषयता।

( नाकरिष्यत् ) इत्यर्थः । सख्युक्तिपक्षे सर्वं नायकसम्बन्धितया योज्यम् । प्रिये ! यद्यपि नानाव्यपदेशैस्तत्कोपापलापाय त्वया प्रयस्यते, किन्तु त्वत्सहचरीसाचिस्मितेनैव स स्फुटीक्रियत इति व्यर्थोऽयं ते तद्गोपनप्रयास इति परिहासाकूतम् ।

तथा च 'केतकः क्रकचच्छदे' इति हैमः, 'गर्भो भ्रूणेऽर्भके कुक्षौ सन्धौ' इति मेदिनी, 'गौरोऽरुणे सिते पीते' इति यादवः, 'नानो ननना सम्बन्धे निषेधार्थे' इत्यव्ययकोशः, 'आधारस्त्वम्भसां यत्र धारणम्' 'तिर्य्यगर्थे साचि' इत्यमरः, 'परिवारः परिजने' इति शाश्वतः, 'कान्तेष्टौ दयितः' 'सहचरी सध्रीची' इति धनञ्जयः, 'छलं मिषम्' इति त्रिकाण्डशेषश्च ।

अत्र केतकगर्भौपम्येनाक्लिष्टस्वर्णकान्ति-मृदुत्व-कोपगोपनक्षमत्वानि, सहवासपरिजिहीर्षादिभिः कोपातिरेकः, दृशः पातेनाबुद्धिपूर्वकत्वमतः स एव, परिजनपदेनात्मीयतया तत्र कोपानौचित्येऽपि तदुपन्यासेनासत्यत्वेन छलपदसाहाय्येन नायके कोपाधिक्यम्, पातपदेन वीक्षणस्याज्ञानपूर्वकत्वम्, अप्यर्थकेन वाशब्देन सहवाससमालपनसंस्पृहेक्षणादेर्दौर्लभ्यम्, ताभ्यां पुनस्तदेव, दयितत्वेन तन्निमग्नमनस्कतया कोपतज्जन्यानादरादेरनौचित्यम्, समा गोपनस्य गाढत्वम्, कोपव्यञ्जकमात्रव्यापारकरणान्नायिकाया धीरात्वम्, इत्थंपदेन कोपगोपनप्रकाराणां बाहुल्यम्, भजनेन लक्षणामूलव्यञ्जनया सस्पृहस्थितिः, सह चरतीति व्युत्पत्त्या सहचरीपदेन सार्वदिकसहवासद्वारा तत्सर्वव्यापाराभिज्ञत्वं मध्येकृत्य तत्स्मितस्य सहेतुकत्वमुखेनापि कोपगोपनव्यापाराणां वैयर्थ्यम्, एकवचनेन स्मितस्याल्पत्वाद्प्रकाश्यत्वम्, तेनास्या नायिकातो भीतिः, कोपस्य गोप्यत्वेऽपि नायकं सूचयित्वा तदपनयनोद्यमश्च, तेजोधर्मस्य प्रकाशस्य कोपे बाधात्तीव्रत्वे लक्षणया तस्य दुस्सहत्वं च सूच्यते ।

एतच्च कैशिक्याख्यवृत्तेरङ्गस्य शृङ्गारभूयिष्ठनर्मणः प्रियापराधप्रतिभेदनं नामाङ्गम् । तत्र पूर्वोदाहरणेषु* वाचा, इह तु चेष्टया तत्प्रतिभेदन( प्रकाशन )मिति विवेकः । अत्र सन्दर्भे कोपक्रोधपदे स्पत्नी-

* 'लीलालिपुञ्जे' इत्यादिषु त्रिषु ।

हेतुकरोषमेवावगमयत इति। 'वधावज्ञादिभिश्चित्तज्वलनं क्रोध ईरितः। एष त्रिधा भवेत् क्रोधकोपरोषप्रभेदतः॥ 'क्रोधः क्रूरजनाश्रयः' 'कोपो धीरजनाश्रयः' 'मिथः स्त्रीपुंसयोरेव रोषः' 'द्वेधा निगदितः स्त्रीणां रोषः पुरुषगोचरः। सपत्नीहेतुराद्यः स्यादन्यः स्यादन्यहेतुकः॥ सपत्नीहेतुको रोषो विप्रलम्भे प्रपञ्च्यते' 'अवहित्थाऽऽकारगुप्तिः' 'अन्यथा कथनं मिथ्या धैर्यमन्यत्र वीक्षणम्। कथाभङ्गादयोऽप्यस्यामनुभावा भवन्त्यमी' इति शिङ्गभूपानुशिष्टो विप्रलम्भशृङ्गारो रसः, नायिकाया धैर्येण रोषेऽप्याकारगोपनादन्यत्र वीक्षणादिभिरनुभावैः सूचितेनावहित्थाख्यव्यभिचारिभावेनोपोद्बलितो व्यज्यते। किन्तु 'एकत्रासनसंस्थितिः परिहृता प्रत्युद्गमाद्दूरतः' इत्येवोदाहरणमितो रुचिरतमम्, बहिरादरातिशयदर्शनेन रोषस्य विलक्षणव्यापारमात्रलक्ष्यतया विच्छित्तिविशेषोदयात्। नायकोक्तितयाऽस्य पद्यस्याङ्गीकारेऽपि सैव युक्तिः। कोपपदस्य द्विरुपादानेन कथितपदत्वं तु पूर्ववत् परिहरणीयम्।

'केतकगर्भगौरि' 'सुधाधारानुकारा गिरः' इत्युपमाभ्यां संसृष्टम्, तल्पानाश्रयणादेः कोपगोपने बीजतया काव्यलिङ्गमलङ्कारः॥ १५॥

अधीरप्रगल्भामुदाहर्तुमुपक्रमते—

प्रगल्भाऽधीरा यथा।

कविस्तटस्थो वा कथयति।

प्रतिफलमवलोक्य स्वीयमिन्दोः कलायां
हरशिरसि परस्या वासमाशङ्कमाना।
गिरिशमचलकन्या तर्जयामास कम्प-
प्रचलवलयचञ्चत्कान्तिभाजा करेण॥ १६॥

इन्दोश्चन्द्रस्य, कलायामंशे, स्वीयं निजम्, प्रतिफलं प्रतिबिम्बम्, अवलोक्य दृष्ट्वा, हरस्य शम्भोः (पत्युः), शिरसि मूर्धनि, परस्या अन्यस्याः सापत्न्येन वैरिण्या वा, वासं स्थितिम् (न तु कादाचित्कागतिमात्रम्), आशङ्कमाना तर्कयन्ती, अचलस्य हिमगिरेः कन्या दुहिता (पार्वती), कम्पात्क्रोधानुभावात्, प्रचलं लोलं, यद्वलयं कङ्कणम्, तेन चञ्चन्त्यः प्रसरन्त्यो याः कान्तयः (कङ्कणमणीनाम्) मरीचयः, ता

भजतीति तद्भाजा, तद्वता करेण हस्तेन ( हस्तोत्क्षेपपुरःसरम् ), गिरिशं शिवम् , तर्जयामास निरभर्त्सयदित्यर्थः । पर्वतपुत्र्या जाड्याधिक्येन स्वप्रतिबिम्बस्याप्यपरिचयः समुचित एव, अधीरप्रगल्भायाश्च सपत्नी-शङ्कयाऽपि पतितर्जनं नाद्भुतमिति भावः ।

तथा च 'प्रतिबिम्बं प्रतिफलम्' इति वाचस्पतिः, 'चन्द्रांशे कलने कला' इति वैजयन्ती, 'परः स्यादुत्तमानात्मवैरिदूरेषु' 'वलयं कङ्कणे-ऽपि च' इति विश्वः, 'शङ्का भयवितर्कयोः' इति शब्दार्णवश्च ।

इह स्वप्रतिबिम्बस्याप्यपरिचयेन पार्वत्या अविवेकः, शिरसि वासेन सम्भाव्यमानसपत्न्या आदरातिरेकेण सौभाग्यम् , तेन तत्रासूया, वासपदेन स्थितेरविचलत्वम् , तावता तद्विषयको भर्तुर्दृढः प्रेमा, शङ्का-शब्देन तत्कोटेरनिश्चये तर्जने प्रवृत्त्याऽविविच्यकारिता, शानचा शङ्का-तर्जनयोः समकालिकत्वम् , तेन क्षिप्रकारित्वद्वारा तदपराधस्य दुस्स-हत्वादमर्षातिशयः, अचलपदेन जडत्वम् , कम्पेन तद्बीजस्य कोपस्य, प्रशब्देन चलनस्य च बाहुल्यम् , ततः केवलकरकम्पनपुरस्सरतर्जनेन वागुच्चारणाक्षमत्वाच्च रोषातिरेकमुखेन प्रागल्भ्यम् , नानामणिमरीचि-मेदुरकणत्कङ्कणकरकरणकत्वात्तर्जनस्यातिभीषणत्वम् , झटिति क्रोधो-दयेन पार्वत्या अधैर्यञ्च सूच्यते ।

गिरिशपदे 'गिरौ डश्छन्दसि' इति वार्तिकाच्छन्दस्येव डस्य विधानान्नैव गिरौ शेत इति विग्रहः, किन्तु गिरिरस्यास्तीति गिरिशः, मत्वर्थे लोमादित्वाच्छः, बाहुलकाश्रयणन्त्वगतिकगतिः । यद्वा गिरिं श्यति वासेनोपभोगेन वा तनूकरोतीति विग्रहे श्यतेः कः । तर्जयते-रात्मनेपदित्वेऽप्यनुप्रयुज्यमानस्यास्तेस्तदभावात्परस्मैपदमेवेति तदर्थं प्रयासान्तराश्रयणं विफलमेव ।

तर्जने शङ्काया मूलत्वात्काव्यलिङ्गमलङ्कारः । 'ननमयययुतेयं मालिनी भोगिलोकैः' इति रत्नाकरलक्षिता मालिनी छन्दश्च ॥ १६ ॥

धीराधीरप्रगल्भामुदाहर्तुमुपन्यस्यति—

प्रगल्भा धीराधीरा यथा ।

सागसि प्रेयस्युपगत्यानुनयति सति धीराधीरप्रगल्भायाश्चरितं सखी कविर्वा वक्ति ।

तल्पोपान्तमुपेयुषि प्रियतमे वक्रीकृतग्रीवया
काक्व्याकुलवाचि साचिहसितस्फूर्जत्कपोलश्रिया ।
हस्तन्यस्तकरे पुनर्मृगदृशा लाक्षारसक्षालित-
प्रोष्ठीपृष्ठमयूखमांसलरुचो विस्फारिता दृष्टयः ॥ १७ ॥

प्रियतमे निकामदयिते ( नायके सागसि ), तल्पस्य शय्यायाः, उपान्तं समीपम् ( न तु भिया तल्पम् ), उपेयुषि समुपगते ( सति न तूपविष्टे ) मृगदृशा हरिणेक्षणया ( नायिकया ), वक्रीकृता तिर्यग्विहिता, ग्रीवा कन्धरा यया तादृश्या ( विचलितकन्धरयाऽभूयत ) । ( पुनस्तस्मिन् ) काका भीतिजध्वनिविकारेण, व्याकुला विकलिता ( गद्गदीकृता ) वाग् यस्य तादृशे ( सगद्गदमनुनयति सति ), साचि तिर्यक्, यद्धसितं लक्षितदशनाग्रो हासः, तेन स्फूर्जन्ती वर्धमाना, कपोलयोर्गण्डयोः श्रीः शोभा यस्यास्तथाविधया, ( अभूयत ) । पुनर्भूयः, ( तस्मिन् ) हस्ते ( स्वीये, नायिकासम्बन्धिनि वा ) करे, न्यस्त आरोपितः करो येन तादृशे ( स्वकरेण नायिकाकरं गृहीतवति सति ), लाक्षाया जतुनो, रसेन द्रवेण, क्षालितं धौतम् ( रञ्जितम् ) यत् प्रोष्ठयाः शफर्याः ( क्षुद्रमत्स्यविशेषस्य ) पृष्ठं वपुःपश्चाद्भागः, तस्य ये मयूखा रश्मयः, त इव मांसला बलवत्यः ( मेदस्विन्यः ), प्रवृद्धाः रुचः कान्तयो यासां तादृश्यो दृष्टयो दृशः, ताभिर्विस्फारिता विस्तारिता रोषेण प्रसारिता इत्यर्थः ।

कृतापराधेन नायकेन यथा यथा धार्ष्ट्यं दर्शितं, तथा तथा तयाऽपि रोषो दर्शित इति भावः ।

तथा च 'ग्रीवा कन्धरा' इति हैमः,

'स्मितं चालक्ष्यदशनं हक्कपोलविकासकृत् ।

तदेव लक्ष्यदशनशिखरं हसितं विदुः' इति शिङ्गभूपालः, 'लाक्षा राक्षा जतु क्लीबे' 'रसः स्वादे, तिक्तादौ विषरागयोः । शृङ्गारादौ द्रवे' इति विश्वः, 'मयूखः कथितो दीप्तौ ज्वालाकिरणयोरपि' इति शाश्वतः, 'प्रोष्ठी तु शफरी द्वयोः' 'बलवान् मांसलोंऽसलः' इत्यमरः, स्फारं वरिष्ठं विस्तीर्णम्' इत्यभिधानचिन्तामणिश्च ।

अत्र प्रियतमपदेनातिप्रेमास्पदत्वेन परमादरयोग्यत्वेऽपि निरीक्षणमात्रेणाऽसम्भावनाद्रोषातिरेकेण तदपराधानां दुःसहत्वम्, उपान्तागमनेन तल्पाधिरोहणव्यवच्छेदं मध्येकृत्य नायकस्य भीतिः, ग्रीवावक्रीकरणे च मूलं सद्यःकृतागस्कशठनायकमुखदर्शनानौचित्यम्, नदीक्षणक्षण एव स्मरणात्तदपराधानामार्द्रता, वाचो व्याकुलत्वेन सर्वे मदपराधा अनयाऽवगता इति नायकस्य भीतिः, कृतकदैन्येनानुनयचातुर्य्यञ्च, नायिकास्मितस्य साचित्वेन सापराधत्वेऽपि नानाविधकृतकानुनयप्रपञ्चेन नायकस्य धार्ष्ट्यं तदवगमेन स्वीयविस्मयविशेषश्च, स्वहस्ते नायिकाकरन्यासेन नेतुः परमराभस्यम्, तस्य हेतुतया नायिकाहासस्य प्रसादजन्यत्वेनावधारणम्, प्रोष्ठीपदेन चाश्चर्यं, तत्कारणं सद्यःकृतागस्कोऽप्ययं प्रसभं मत्करं परामृशन् भवतीभिर्न वार्य्यत इति सखीजनं प्रति कोपः, पृष्ठपदेन दृष्टेः कार्कश्यम्, ततः कोपः दृष्टेर्विस्फारितत्वेन वैचित्र्यं द्राघिमा च, ताभ्यां तदपराधानामसहनीयत्वम्, सतिसप्तमीभिः शय्योपान्तोगमादेर्ग्रीवावक्रीकरणादिसमकालिकत्वद्वारा रोषातिरेकः, प्रोष्ठीपृष्ठस्य स्वतो रक्तस्यापि लाक्षारसक्षालनेन रक्तिमाधिक्यं, तदुपमया दृष्टेः कोप एव, मांसलतायाश्चलनबृस्तित्वान्मयूखे बाधाद्राधिक्ये लक्षणया दुष्प्रेक्षत्वं च सूच्यते ।

'उपेयिवाननाश्वाननूचानश्च' इति निपातादिणि लिटः क्वसुः । मांसलेति मांसशब्दात् 'सिध्मादिभ्यश्च' इति सूत्रेण मत्वर्थे लच्, प्रकृते लक्षणा । वज्रनिर्घोषे पठितस्यापि स्फूर्जधातोरनेकार्थकत्वाद्वृद्ध्यर्थकत्वम् । विस्फारिता इति स्फरधातोर्णिजन्तात् क्तः । 'धृष्टो व्यक्तान्ययुवतीभोगलक्ष्य' इति रसार्णवसुधाकरोक्तलक्षणो धृष्टो नायक एषूदाहरणेषु ।

दृष्टिरुचिषु प्रोष्ठीपृष्ठमांसलमयूखसादृश्येनेवादिपदानुपादानाल्लुप्तोपमयाऽनुप्रासेन च संसृष्टतयोपान्तोपगमादेर्ग्रीवावक्रीकरणादौ हेतुतया मालया काव्यलिङ्गमलङ्कारः ॥ १७ ॥

इदानीं धैर्य्याधैर्य्यव्यतिकरेण षड्विधयोर्मध्याप्रगल्भयोर्ज्यैष्ठ्यकानिष्ठ्याभ्यां द्वैविध्यमुपगमयति—

एते च धीराऽऽदिषड्भेदा द्विविधाः ।

एतेऽनुपदोक्ताः, धीरा, अधीरा, धीराधीरा चेति त्रिविधाः, मध्या प्रगल्भा चेति षट्, भेदाः प्रकारा मध्याप्रगल्भयोरिति शेषः।

ज्यैष्ठ्यकानिष्ठ्याभ्यां तानेवोद्दिशति—

धीरा ज्येष्ठा कनिष्ठा च, अधीरा ज्येष्ठा कनिष्ठा च, धीराधीरा ज्येष्ठा कनिष्ठा च।

ज्येष्ठत्वकनिष्ठत्वे च स्वविषयकपतिवृत्तिरतेराधिक्यन्यूनताभ्यामवसेये। यत्त्विदमपि प्राचीनसम्प्रदायानुरोधेनास्य चिन्त्यत्वकल्पनम्, तदसमञ्जसम्, पूर्वत्र विरुद्धयोरपि धैर्याधैर्ययोः सामानाधिकरण्याय तथाऽभ्युपगमेऽपि प्रकृते ज्यैष्ठ्यकनिष्ठत्वयोर्वैयधिकरण्यस्यैवाङ्गीकारेण तदनौचित्यात्।

अन्यत्र वयसा प्रसिद्धे अपि ज्येष्ठत्वकनिष्ठत्वे प्रकृते परिणेतृप्रणयतारतम्येन व्यवस्थापयँल्लक्षयति—

परिणीतत्वे सति भर्तुरधिकस्नेहा ज्येष्ठा, परिणीतत्वे सति भर्तुर्न्यूनस्नेहा कनिष्ठा।

परिणीतत्वं पाणिग्रहणसंस्कारवत्त्वम्। भर्ता परिणेता, न तु यः कोऽपि पोषकः। भर्तुरधिकस्तथा न्यूनो वा स्नेहो रतिर्यस्यामिति बहुव्रीहिः। उक्तपूर्वधीराऽधीराधीराऽधीरामध्याप्रगल्भालक्षणेषु स्त्रीविशिष्टत्वं निवेश्य क्रमेण ज्येष्ठाकनिष्ठयोर्लक्षणे विधेये। तत्र ज्येष्ठालक्षणे वैशिष्ट्यन्तु स्वनिरूपितरतिविशिष्टरतिनिरूपकत्वस्वपरिणेतृपरिणीतत्वाभ्यां, रतिवैशिष्ट्यन्तु स्वसामानाधिकरण्यस्वावधिकोत्कृष्टत्वाभ्यां, कनिष्ठालक्षणे तु रतिवैशिष्ट्यनियामकद्वितीयसम्बन्धास्पदे स्वावधिकनिकृष्टत्वं प्रवेशनीयम्। द्वितीयसम्बन्धनिवेशात् परकीयासामान्ययोः द्वितीयवैशिष्ट्यनिवेशाच्च ज्येष्ठाकनिष्ठालक्षणयोः परस्परं च नातिव्याप्तिः।

तदेवाह—

अधिकस्नेहासु न्यूनस्नेहासु सामान्यवनितासु नातिव्याप्तिः परिणीतपदेन व्यावर्तनात्।

इह सामान्यवनितापदं परकीयाया अप्युपलक्षकं, स्वीयाया एवोपक्रान्ततया परकीयाया अपि व्यवच्छेद्यत्वात्, केवलमधिकन्यूनस्नेहाभ्यामापादिताऽतिव्याप्तिस्तयोस्तत्परिणयाभावेन व्यवच्छेद्यत्वाद्वार्यते।

धीरे ज्येष्ठाकनिष्ठे उदाहर्तुमुपक्रमते—

धीरा ज्येष्ठा कनिष्ठा च यथा—

शठनायकचरितं सखी तटस्थः कविर्वाऽभिदधाति—

एकस्मिन् शयने सरोरुहदृशोर्विज्ञाय निद्रां तयो-
रेकां पल्लवितावगुण्ठनपटामुत्कन्धरो दृष्टवान्।
अन्यस्याः सविधं समेत्य निभृतव्यालोलहस्ताङ्गुलि-
व्यापारैर्वसनाञ्चलं चपलयन् स्वापच्युतिं क्लृप्तवान्॥ १८॥

एकस्मिन्नेकत्र शयने तल्पे सरोरुहे कमले इव दृशौ ययोस्तयोः कमलाक्ष्योः ज्येष्ठाकनिष्ठयोर्नायिकयोः निद्रां स्वापं वस्तुतो नायकापराधजकोपेन निद्राव्याजं विज्ञायावधार्य तयोर्मध्ये एकां कनिष्ठामनतिप्रियाम् पल्लवितः स्वभावादपराधिनो नायकस्य मुखवीक्षणानौचित्याद्वा पल्लव इवाचरितो नखादाशिखं विस्तारितः अवगुण्ठनपट आवरकवासो यस्या यया वा तां वस्त्रसमाच्छादितशरीरां कदाचिदियं परया सङ्गतं मां पश्येदिति भियोन्नतोत्थिता कन्धरा ग्रीवा यस्य तादृश उन्नतग्रीवः सन् दृष्टवान् नायकः अन्यस्या इतरस्याः तेनैव सुप्ताया अतिप्रियत्वेन ज्येष्ठायाः सविधं समीपं सम्यक् समन्दपदन्यासम् एत्यागत्य निभृतं गुप्तं व्यलोलाश्चञ्चला याः नायकस्य नायिकाया वा हस्तस्याङ्गुलयः शाखाः तासां व्यापारैः क्रियाभिः न तु हस्तस्य तथा सति वलयादिक्वणनेन कनिष्ठाद्बुध्येत वसनस्य तदीयशाटकस्य अञ्चलमग्रप्रान्तं न तु समस्तमेव वसनं तथा सत्याकस्मिकतदाकर्षणेन सम्भ्रान्तायाः कोलाहलेनाभाष्टासिद्धिः स्यात्, चपलयँश्चालयन् कुपितपूर्वायाः पुनरपि वस्त्राकर्षणरभसेन कोपः स्यादेवेति भिया न त्वाकृषन् स्वापस्य निद्रायाः च्युतिं भङ्गं रिरंसया क्लृप्तवानकरोदित्यर्थः।

प्रेमाधिक्येन कनिष्ठासविधेऽपि निभृतं रन्तुं ज्येष्ठामुद्बोधयदिति विचित्रं तस्य कौशलम् प्रेम्णश्च कौटिल्यमिति भावः।

तथा च 'विरिङ्गिण्यवगुण्ठिका' इति त्रिकाण्डशेषः, 'निभृतं रह एकान्तम्' इति धरणिः, 'अङ्गुलिः करशाखायाम्' इति विश्वः, 'निद्रा मीला शयनं संवेशस्वापसलयाः' इति हैमः, 'कर्तनं कल्पनं वलूण्ती' इति शाश्वतश्च।

इहावगुण्ठनपदस्य कोशेन जवनिकायां शक्तौ ग्राहितायामपि 'अथ केयमवगुण्ठनवती' इतिप्रयोगानुरोधादाच्छादकमात्रे लक्षणा, नितान्ताच्छादनं तु प्रयोजनं व्यङ्ग्यं तथोद्भिद्यमानस्य पल्लवनस्य वसने बाधात्सर्वतो वेष्टनं बोधयितु विस्तारे लक्षणा सापत्न्येप्येकत्र शयनान्नायिकयोमैत्री तया तयोर्विषये नायकस्यैकविधोऽपराधः मध्ये नायकस्थित्यनवकाशायैव तयोः संप्रश्लिष्टस्थितया निद्रया च कोपः तथा च रतौदास्येन तयोः मध्ययोः प्रगल्भयोर्वा धीरात्वम्, वसनपल्लवनेन नायकादर्शनद्वारा तदागोऽवगतिजन्मा रोष उत्कन्धरदर्शनेन कनिष्ठोद्बोधाद्भीतिः तया तदीयक्रीडाऽनौत्सुक्येन प्रणयापकर्ष इति तस्याः कनिष्ठात्वम्, परत्र च क्रीडौत्सुक्येन प्रणयोत्कर्षाज्ज्येष्ठात्वम्, निभृतपदेनाङ्गुलीनां नायकोत्तरीयान्तरितत्वेन तद्व्यापाराणां परालक्ष्यतया भीतिरेव हस्तपदेन चरणाङ्गुलीनां व्यवच्छेदात्कनिष्ठादर्शनाद्भियोपवेशनम्, बहुवचनादङ्गुलिव्यापाराणां बाहुल्यं तेनैकेनापि व्यापारेण स्वापच्युतावपि नेत्रानुन्मीलनाद्धीरप्रगल्भालक्षणं रतौदास्यं च द्योत्यते।

एतदुदाहरणत्रये 'क्रमकौटिल्यानुल्बणत्वयोगः श्लेषः' इति वामनोक्तः श्लेषाऽर्थगुणः। 'शठोऽयमेकत्र बद्धभावो यः।

दर्शितबहिरनुरागो विप्रियमन्यत्र गूढमाचरति'

इति दर्पणलक्षितोऽत्र शठो नायकः। पूर्ववत्काव्यलिङ्गमलङ्कारश्च ॥ १८ ॥

अधीरे ज्येष्ठाकनिष्ठे उदाहर्तुमुपन्यस्यति—

अन्तः कोपकषायिते प्रियतमे पश्यन् घने कानने

पुष्पस्यावचयाय नम्रवदनामेकां समायोजयत्।

अर्धोन्मीलितलोचनाञ्चलचमत्काराभिरामाननां
स्मेरार्द्राधरपल्लवां नववधूमन्यां समालिङ्गति ॥ १९ ॥

शठो नायकः अन्तर्हृदये कोपेन प्रियापराधजन्मना रोषेण कषायिते रक्तीकृते यद्वा विरसीकृते कलुषिते प्रियतमे प्रेयस्यौ कनिष्ठाया ज्येष्ठाऽपेक्षया तत्त्वाभावेऽप्यन्यापेक्षयैव तत्त्वं बोध्यम्। वस्तुतस्तु रमणीदयितादिपदवत् प्रियतमापदमपि वधूमात्रबोधकं न तु प्रणयतारतम्यं ततः प्रतीयत इति न दोषः, पश्यन् तर्जनादिभिस्तत्कोपमेव प्रत्यक्षमिवावलोकयन् घने निविडे विस्तीर्णे वा कानने वने अन्तर्मध्ये वा पुष्पस्य कुसुमजातेः न त्वेकस्यैव कुसुमस्य तथा सति झटित्येव मुखोन्नमनान्नायकाभीष्टासिद्धिः स्याद् अवचयाय विचयाय ग्रहणाय नम्रवदनां स्त्रीजातिस्वभावाद् नायकं प्रति रोषाद्वा नतमुखीं तयोर्मध्ये एकामेकतरां कनिष्ठां स्वयं पुष्पावचये प्रवृत्तामपि सम्यक् सकृतकविनयं सप्रशंसं निपतितोत्कृष्टकुसुमसमूहदर्शनपूर्वकं वा आयोजयामास पुष्पाण्यवचेतुम् प्रैरयत्, तथा सति तामपि ज्येष्ठाऽऽलिङ्गनस्य तया द्रष्टुमशक्यत्वात् पुनः अन्यामपरां ज्येष्ठाम् अर्धं सामि उन्मीलितः प्रियस्य कपटपाटवं स्वस्मिंश्च प्रणयोत्कर्षं सपत्न्याश्च तत्कपटानभिज्ञतया निर्जितत्वं च विभाव्य हृष्टाया विस्मितायाश्च तस्या य ईषद्विकसितः मुकुलितो लोचनाञ्चलो नयनाग्रप्रान्तः कटाक्षः तस्य ये चमत्कारा लोकविस्मायकविच्छित्तिविशेषाः विभ्रमाः तैरभिरामं मनोहरम् आननं मुखं यस्यास्ताम्, तथा स्मेरः स्मितेन विकसितः किञ्च आर्द्रः स्वाभाविकेन सुधाऽधिकमधुररसेन कृत्रिमयावकादिद्रवेण स्मितसुधापूरेण वा क्लिन्नः अधरोऽनुत्तरोष्ठः पल्लव इवाधरपल्लवो यस्यास्तादृशीं नववधूं नवयौवनभूषितरमणीं यद्वा कनिष्ठाऽपेक्षया नवीनवयस्कां न तु नवोढाम्, तस्या मध्याप्रगल्भात्वाभावात् सम्यक् सविशेषं विविधचुम्बननखदशनक्षतिपुरस्सरं वाऽऽलिङ्गति परिष्वजतीत्यर्थः।

दृश्यतां धूर्तोऽयं कियता कपटेन स्वाभीष्टं साधयति; इयं च वराकी कनिष्ठा तन्नैव वेत्तीति कथनस्याकूतम्।

तथा च

'कषायो रसभेदे स्यादङ्गरागे विलेपने ।

निर्यासेऽपि कषायोऽथ सुरभौ लोहितेऽन्यवत्'

'घनं सान्द्रे' इति विश्वः, 'विस्तारेऽपि घनम्' इति शाश्वतः,

'स्तोकोन्मीलिततारा या मनाक्कुञ्चत्पुटोभया ।

किञ्चिदुत्फुल्लपद्माग्रा दृक् साऽर्धमुकुला मुखे' इति वैजयन्ती, "कानन वनम्' इति हैमः, 'चमत्कारश्चित्तविस्ताररूपो विस्मयापरपर्यायः' इति दर्पणः, 'आर्द्रं क्लिन्नम्' इत्यमरः, 'अभिरामं मनोहरम्' इति मल्लिनाथश्च।

इहान्तःप्रियतमपदार्थयोः काननान्वयित्वमङ्गीकुर्वतां मते तयोर्मुख्यानुपयोगित्वादपुष्टत्वमापद्यते, न चैवमधीराप्रतीतिभङ्गो न वोभयोः प्रियतमात्वासम्भवः कोपस्य जगन्नाथप्रमुखैश्चित्तवृत्तिविशेषरूपतया व्यवस्थापनाद्धीरागतस्यापि तस्यान्तर्मात्रवृत्तित्वाद्बहिस्तदनुभावस्यैव स्फुरणाद् उक्तयुक्त्या कनिष्ठायाश्चापि प्रियतमात्वसम्भवाच्च, एवं स्मेरेण धर्मपरतया स्मितेत्यर्थकल्पनमपि "अभिधानलक्षणाः कृत्तद्धितसमासाः" इति महाभाष्यसिद्धान्तप्रतीतमेव, तथा 'स्मेराधरपल्लवाम्' इति पाठकल्पनायां सलज्जत्वव्यञ्जनेऽप्यर्धपदस्य पुनरुक्तिः स्यादेव ।

काननस्य घनत्वेन तमोबाहुल्याज्ज्येष्ठाऽऽलिङ्गनस्यालक्ष्यतया सुकरता, पुष्पपदेन स्पृहणीयता, तथा तद्वत्त्वयेऽत्यासक्तिः, आक्रा प्रेरणाया आधिक्यं समीचीनता च ताभ्यां तदितराश्लेषोत्कण्ठा लोचनाञ्चलस्य मुकुलनेत्रता, तच्चमत्कारैश्च प्रणयोत्कर्षः अधरस्येव स्मेरत्वेन 'ज्येष्ठानां स्मितहसितम्' इति दर्पणोक्तनीतिकाया उत्तमप्रकृतित्वम्, आर्द्रतया स्मितस्य सद्योजातता सुधाद्रवसादृश्येन माधुर्य्यं श्वेतिमातिशयश्च, पल्लवत्वरूपणेन मृदुत्वम्, नवत्वेनानुपभुक्तत्वादक्लिष्टकान्तेरधरस्य कमनीयतमत्वम् तेन तदालिङ्गनायोत्सुक्यम्, अन्तःस्थकोपजन्येनापि बहिःस्फुरता कषायशोभावेणाधीरात्वं, साक्षात्कोपसमर्पकव्यापारान्तराकरणेन कोपप्रकाशस्य व्यङ्ग्यत्वाच्च धीरात्वम्, लताऽऽश्लेषस्य विद्यमानत्वमुखेन प्रेष्ठता च सूच्यते । यथापूर्वं काव्य-

लिङ्गम्, अधरः पल्लव इवेत्युपमा चालङ्कारः। अधर एव पल्लव इति रूपकस्यापि सन्देहेनोपमारूपकयोः सन्देहसङ्करस्तु नाशङ्कनीयः, पल्लवे स्मेरार्द्रत्वासम्भावनाया रूपकस्य बाधकत्वात् ॥ १६ ॥

धीराधीरे ज्येष्ठाकनिष्ठे उदाहर्तुमाह—

धीराधीरा ज्येष्ठा कनिष्ठा च यथा—

सखी कविर्वा कथयति—

धैर्य्याधैर्य्यपरिग्रहग्रहिलयोरेणीदृशोः प्रीतये
रत्नद्वन्द्वमनन्तकान्तिरुचिरं मुष्टिद्वये न्यस्तवान् ।
एकस्याः कलयन् करे प्रथमतो धूर्तः परस्याः प्रियो
हस्ताहस्तिमिषात्स्पृशन् कुचतटीमानन्दमाविन्दति ॥ २० ॥

प्रियो दयितः पतिः धैर्य्याधैर्य्ययोस्तद्बोधकपूर्वोक्तव्यापारयोः, परिग्रहे स्वीकारे करणे, ग्रहिलयोराग्रहवत्योः, एणीदृशोर्हरिणीसदृशनयनयोः नायिकयोः प्रीतये प्रमोदाय, अनन्ताभिरनवसानाभिः कान्तिभी रुचिभी रुचिरं कमनीयम्, रत्नद्वन्द्वं मणियुगलं, स्वस्य मुष्टिद्वये मुस्तकद्वितये, न्यस्तवानरक्षत्, ततः प्रथमतः पूर्वम्, तयोः एकस्याः एकतरस्याः कनिष्ठायाः करे हस्ते, रत्नं कलयन्नारोपयन् समर्पयन् परस्या अन्यस्या ज्येष्ठायाः कुचतटीं स्तनाग्रप्रदेशं, हस्ताहस्तिमिषात् परस्परकरग्रहणस्य तत्पूर्वकक्षणिकविवादस्य तुच्छयुद्धकल्पस्य वा व्याजात्, स्पृशन्नामृशन्, आनन्दं प्रीतिम्, आ सम्यक्, विन्दति लभत इत्यर्थः ।

तथा च 'परिग्रहः कलत्रे च मूलस्वीकारयोरपि' 'प्रेमप्रमोदयोः प्रीतिः' इति शाश्वतः, 'द्वन्द्वं रहस्ये कलहे तथा मिथुनयुग्मयोः' 'मिषश्च स्पर्धने व्याजे' इति विश्वः, 'रत्नं मणिः' इत्यमरः 'अक्लीबौ मुष्टिमुस्तकौ' इति यादवश्च ।

अत्र नारायणभट्टोक्तरीत्या तुन्दादिमाकृतिगणं मत्वा 'तुन्दादिभ्य इलच्' इति सूत्रेण ग्रहशब्दान्मत्वर्थे इलच् । प्रीतय इति तादर्थ्ये चतुर्थी हस्तयोर्हस्तयोर्गृहीत्वेयं क्रीडारूपा क्रिया प्रवृत्तेत्येतावदर्थे 'तत्र तेनेदमिति सरूपे' इति सूत्रेण युद्धप्रवृत्त्यभावेऽपि काचित्क इह

समासः, सूत्र इतिशब्दस्य बहुलार्थकत्वादिति प्रयोगदर्पणकारः। इत्थमेव 'कर्णाकर्णिप्रथितमयशो बन्धुवर्गैरभाणि' 'पुमान् सङ्ग्रहणे ग्राह्यः केशाकेशि परस्त्रियाः' इत्यादावपि गतिः। के चित्तु वादिप्रतिवादिनौ युध्येते इति व्यवहारदर्शनादिहापि वादयुद्धं स्मरयुद्धं वा मत्वा समादधति, किन्तु 'कर्णाकर्णि' इत्यत्र तु तस्याप्यभावात्तेनापि गत्यन्तरमेवाश्रयणीयम्। एतेन क्रीडायामेव युद्धत्वमारोप्य प्रकृतदूषणं समादधती नागेशोक्तिरपि नैव सचेतसाम्मनोरमा।

परिग्रहपदेन धैर्याधैर्ययोः ससारत्वापरिहेयत्वे, अहिलतया मानवत्ता, एणीदृक्पदेन नेत्रसौष्ठवद्वारा वशीकारकत्वात्तदीयमानस्य नियतापनेयत्वम्, मुष्टिपदेनाङ्गुलीबन्धस्य दार्ढ्यद्वारा रत्नयोर्झटिति ग्रहणासम्भवः, ततश्चिरं द्वितीया कुचकलशस्पर्शरसः तावता तत्रासक्त्यतिशयः, तथा च तस्या ज्येष्ठात्वम्, अन्यत्र तदभावात् कनिष्ठात्वम्, प्रेक्षावत्सूक्ष्मेक्षिकालक्ष्याणि तयोर्धीराधीरत्वमध्यप्रगल्भत्वानि च, मणिद्वयस्य न्यासेन महत्त्वं करे मणेः कलनेन कनिष्ठायास्तदादानप्रवणतायां नेतुर्ज्येष्ठाश्लेषावकाशः हस्ताहस्तिमिषपदेन स्तनस्पर्शस्य ज्येष्ठायाः कृतकानुमतिः कनिष्ठातो गोप्यता च नाभ्यां तत्र कामनीयकातिशयश्च व्यज्यते।

उदाहरणत्रितयेऽत्र—

"छलमन्यानुरोधेन मुधाऽन्यस्य प्रकाशनम्"

इति प्राचा लक्षितं छलं काव्यलिङ्गश्चालङ्कारश्च ॥ २० ॥

इत्थमेकैव मुग्धा, मध्याप्रगल्भे तु धीरत्वेनाधीरत्वेन च प्रथमं षट्, पुनर्ज्येष्ठत्वकनिष्ठत्वाभ्यां प्रत्येकं द्वे इति द्वादश, सङ्कलनया त्रयोदशविधां स्वीयां सपरिकरं निरूप्य प्राप्तावसरतया परकीयां निरूपयँल्लक्षयति—

अप्रकटपरपुरुषानुरागा परकीया।

अप्रकटः सूक्ष्मेतरबुद्धिगोचरः, परपुरुषानुरागः परिणेतृभिन्नपुरुषविषयकरतिर्यस्याः सा [1]'परकीया'। लक्षणन्तु स्वत्ताशाल्यस्व-

---

१ परस्येयमिति विग्रहे 'गहादिभ्यश्छः' इति सूत्रेण छः, 'कुग् जनस्य परस्य च' इति गणसूत्रेण च कुक्।

पतिभिन्नपुरुषविषयकरतिमत्त्वाभ्यां नायिकाविशिष्टत्वम्, [1]स्वीयात्वसामग्र्यां स्वितरनायिकात्वसात्ताद्व्याप्योपाधिमत्त्वं वा। यथाश्रुते तु

'निन्दतु नाम ननन्दा, हसतु सपत्नी, पतिस्त्यजतु।
उच्चैरिदं वदामो मम सखि दामोदरः शरणम्॥'

'ज्ञात्वा मैत्रीं सहजमधुरापातिभिर्लोचनान्तः
कर्णाकर्णिप्रथितमयशो बन्धुवर्गैरभाणि।
सम्प्रत्येषा तदपि न मनाङ् मुञ्चति प्राणनाथं
को जानीते कुवलयदृशः कीदृशः प्रेमबन्धः॥'

इत्यादौ लक्षितायामव्याप्तिः। एतेन वित्तमात्रानुपाधिकाप्रकटपरपुरुषानुरागवत्त्वं परकीयात्वमिति लक्षणं कुर्वाणाः प्रत्युक्ताः।'

परकीयां विभजते—

सा द्विविधा परोढा कन्यका च।

सा परकीया परेण साम्प्रतमनुरक्तादन्येनोढा परिणीता। परिणयश्चात्र लक्ष्यानुरोधेन [2]स्मृत्युक्तोऽष्टविधः, व्यक्तं दासीत्वेन परिग्रहश्च ग्राह्यः। कन्यकाऽजातपाणिग्रहणा कन्दर्पाङ्कुरणार्हदशां स्पृशन्त्येव, शिशोरुल्लिखितनायिकात्वविरहात्॥

कन्याया अनूढतया परकीयापदयोगार्थसमन्वयविरहस्य सम्भावनामपनयति—

कन्यायाः पित्राद्यधीनतया परकीयता।

तदानीं पत्युः स्वत्वानुत्पत्तावपि पितुस्तदभावे भ्रात्रादेः स्वत्वस्य सत्त्वान्न योगार्थविश्लेषः, वस्तुतस्तु लक्षणपरिष्कारेणापहृतोऽयं दोष इत्येषा गतानुगतिकरसिकानां सरणिः। परे तु 'मनोरथेन स्वपतीकृतं नलम्' इत्यादिदर्शनात् कन्याया वैधपाणिग्रहणात्प्रागपि पतित्वेनाङ्गीकृत एव पुंस्यनुरागोल्लासात् 'स्वीयावत्कन्यका ज्ञेया' इति शिङ्गभूपेन साम्यक्रमेणादिष्टं स्वीयात्वमेव स्वीकुर्वन्ति। अक्लिष्टचरि-

---

1 लाघवाल्लक्षणान्तरम्।

2 'ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथाऽऽसुरः॥ गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः॥' इति मनुः।

अथा अविकृतमनसस्तस्याः पुंश्चलीकुलप्रवेशमिव परकीयाऽन्तःपातं दुस्सहं मन्यमानास्तदनुकूलमेव स्वीयालक्षणं परिष्कुर्वन्ति च ॥

तस्याश्चेष्टां निरूपयति—

अस्या गुप्तैव सकला चेष्टा ।

अस्याः परकीयायाः, तस्याः परपुरुषानुरागस्य रहस्यतया तद्व्यञ्जिका सकला चेष्टाऽपि गूढा सहृदयेतराविभाव्यैव ।

तत्र पूर्वं परोढामुदाहर्तुमुपक्रमते—

परोढा यथा ।

परमोद्दीपकरुचिररेवाकुञ्ज-सुरभि-समीराद्युपगमेन परपुरुषसमागमोत्सुका भङ्ग्या काचित्स्वाभिप्रायमुदाहरति—

अयं रेवाकुञ्जः कुसुमशरसेवासमुचितः
समीरोऽयं वेलादरविदलदेलापरिमलः ।
इयं प्रावृड् धन्या नवजलदविन्यासचतुरा
पराधीनं चेतः सखि ! किमपि कर्तुं मृगयते ॥ २१ ॥

हे सखि ! वयस्ये ! अयं दृश्यमानः, रेवाया नर्मदायाः तटे कुञ्जो लतामण्डपः कुसुमशराभ्यां पुष्पसलिलाभ्याम् ईश्वरस्य सेवायां सपर्यायाम् , यद्वा कुसुमैः पुष्पैः, शं सुखं राति ददातीति शरः सुखदो देवस्तस्य सेवायां, वस्तुतस्तु कुसुमशरस्य कामस्य सेवायां स्मरक्रीडायाम् , यद्वा कुसुमैः शरस्य सुखदायकस्य नायकस्य सेवायामयाचितवपुस्समर्पणलक्षणशुश्रूषायां न तु तूष्णीमवस्थातुं केवलमवलोकयितुं वा समुचितः समञ्जसः योग्यः, यद्वाऽभ्यस्तोऽस्ति तथाऽयं स्पृश्यमानः समीरोऽनिलः वेलायां कुञ्जस्य रेवाया वा सीम्नि उपकूलम् , दरमीषद् विदलन्त्या विकसन्त्या एलायाः पुटिकायाः परिमलो विमर्दोत्थसुरभिर्यत्र तादृशः देवस्य दयितस्य चोपासनाऽनुकूलोऽस्ति, किञ्च इयं पुरो विलसन्ती प्रावृड् वर्षर्तुः जलधरसमयः नवजलदानां नवीनपयोमुचां विन्यासे रुचिरसन्निवेशे चतुरा प्रवीणा अतएव धन्या तापशमनेन चेतस्समाधानोपयोगि-

तथा वस्तुतस्तूद्दीपकत्वेन चिरविरहितदयितसंमिलनसम्पादनया पुण्यवती अस्ति, एवं सर्वसामग्रीसमुदये सति पराधीनम् परमेश्वरायत्तं, किञ्च श्वश्रूप्रभृतिगुरुजनपरवशम् पतिभिन्नोत्कृष्टतमप्रियायत्तम् उद्दीपनावलोकनेन मदनपरतन्त्रं निजेतरसखीनिघ्नं वा मम चेतो मनः किमप्यनिर्वचनीयं तपः परमरहस्यतया विशिष्य वक्तुमनर्हम् परपुरुषसुरतवितानम् तदलाभे निधनसमारम्भं च कर्तुमाचरितुम् मृगयतेऽन्विष्यति विचारयतीत्यर्थः।

तथा च 'रेवेन्दुजा पूर्वगङ्गा नर्मदा' इति हैमः, 'शरं नीरे' 'शं सुखम्' इति विश्वः, 'वेला काले च सीमायामब्धेः कूलविकारयोः' इति मेदिनी, 'एला त्वचि सुगन्धा च पुटिका' इति धनञ्जयः, 'विमर्देत्थे परिमलो गन्धे जनमनोहरे' इत्यमरः, 'प्रावृड् जलधरसमयः' इति वररुचिः, 'समञ्जसं स्यादुचितमभ्यस्तम्' इति शाश्वतश्च।

इह सखीति सम्बुद्ध्या परमप्रेमविश्रम्भयोः पात्रत्वेन झटिति स्वसमीहितपूरकत्वं रहस्याख्यानयोग्यता च, इदमा कुञ्जस्य सांनिध्येन गतागतश्रमाभावः नितरामुद्दीपनता च, तस्य रेवातटस्थत्वेन तटस्थजनं प्रति पावनत्वं सखीं प्रति तु सुरतश्रमजन्यस्वेदापनोदनदक्षशीतलत्वं श्वश्रानुमतस्नानार्थं प्रात्याह्निकगमनाभ्यासेनानिशंगमनार्हत्वं च ततः स्वाभिमतदयितमिलनसौकर्य्यमुद्दीपनत्वं च, कुञ्जपदेन जनसञ्चरणशून्यत्वं तत्रत्यव्यापारस्येतरजनालक्ष्यत्वं च, ताभ्यां निश्शङ्ककेलिसामञ्जस्यं कुसुमशरपदेनाराधनसौकर्य्यं सेवाशब्देन प्रसादजनकत्वम्, औचित्येन तदनाचरणे मदनशराणां कुसुमानां बाहुल्येन भविष्यत्क्लेशातिशयः, समीरशब्देन मदनोद्रेकजनकत्वं वेलासम्बन्धेन पवने शैत्यम्, तेन सुरतश्रमहारकत्वम्, एलाया ईषद्विकासेन तत्परिमलेऽतिशयः तत उद्दीपनतायाः परिपोषः, प्रावृषो धन्यत्वनिदानं परोपकारव्रतम्, जलदानां नधरत्वेन सजलत्वमुखेनोद्दीपकत्वं, विन्यासपदेन तत्संनिवेशस्य रामणीयकम्, चातुर्य्येण मुहुस्तद्विन्यासरसिकता, प्रावृषो नवजलदविन्यासचातुर्य्यवर्णनेन नवयौवनोल्लसितकान्तसङ्गमप्रावीण्यस्य

सख्या उपदेशः, भविष्यद्वर्षेण कुञ्जपरिसरपथस्य पिच्छिलतया जनसञ्चरणराहित्येन निरापत्क्रीडाऽर्हत्वम्, नवजलदयुक्तप्रावृषो धन्यतोपाख्यानेन काक्काऽनुपलब्धकान्तसमागमस्यात्मनोऽधन्यत्वं सख्या वा तडिज्जलदसमागमननिपुणप्रावृडवन्नायकसङ्गमनप्रावीण्यविरहादधन्यत्वम्, स्त्रीत्वनिर्देशेनैष्यमाणसुरतोपयोगिनिबिडान्धकारसम्पादनरूपानुकूलकार्य्यकारितया प्रावृषि प्रणयिसखीसदृक्षपक्षपातः, ममपदानुपादानेन वैयोगिकानां वैषयिकाणां वा दुःखानामनुभावकत्वेन प्रतिकूलाचरणाच्चेतसोऽनात्मीयता चेतसः पराधीनत्वेनौचित्यविचाराद्यक्षमत्वं, तन्निग्रहस्याशक्यत्वेन तदीहितकान्तसङ्गमस्यावश्यसम्पाद्यता, किमपीत्यनेन 'स्पृहितवस्तुन्यत्यादरादभिलाषोत्कर्षः, काक्का तु न किमपीत्युक्त्या परपुरुषानुरागस्य गोपनम्, मृगयतिनेष्टस्याप्रगतता झटिति विधेयत्वं च संलक्ष्यक्रमं वस्तु, परपुरुषविषयकासंलक्ष्यक्रमरतिश्च वक्त्री बोद्धव्यादेशकालादिवैशिष्ट्येन द्योत्यते। तदुक्तं मम्मटेन—

वक्तृबोद्धव्यकाकूनां वाच्यवाच्यान्यसन्निधेः।
प्रस्तावदेशकालादेर्वैशिष्ट्यात्प्रतिभाजुषाम्।
योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा' ॥ इति।

रसिकरञ्जनीकारानुमतं वेलाशब्दस्य प्रकृते कालार्थकत्वं तु कोशानुशिष्टमपि सङ्केतविरहान्न क्षोदक्षमम्। नवविद्युलवेलेति पाठस्तु कथितपदत्वदूषणाक्रमणादनुपादेयः।

चेतसो विशेषच्चिकीर्षाया रेवाकुञ्जादीनामुत्थापकत्वेन काव्यलिङ्गमलङ्कारः। व्यङ्ग्यार्थानामुपकारकत्वविवक्षायां तु परिकरः। नवजलदविन्यासचतुरा प्रावृड् धन्या, कामुकसङ्गमनानभिज्ञा त्वं त्वधन्येति प्रावृडपेक्षया सख्या अपकर्षस्य व्यज्यमानतया व्यतिरेकस्तु व्यङ्ग्य एव। 'रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणी' इति रत्नाकरलक्षितं शिखरिणीछन्दश्च ॥ २१ ॥

परकीयात्वेन प्रसिद्धानां गुप्ताविदग्धादीनामिहानुपादानादापन्नां न्यूनतां परिहरति—

गुप्ता—विदग्धा—लक्षिता—कुलटा-ऽनुशयाना—मुदिता प्रभृतीनां परकीयायामेवान्तर्भावः।

प्रकारार्थकः प्रभृतिशब्दस्तेन स्वयन्दूत्यादीनां सङ्ग्रहः। इहोक्ता गुप्ताद्योऽनुक्ताश्च तादृश्यः परकीयालक्षणसमन्वयात् पार्थक्यकारणानुपलम्भाच्च परोढाया एव प्रभेदा इति तस्या द्विधा विभागेऽपि न क्षतिः। गुप्तेति कर्तरि क्तः। तत्र पूर्वोक्तपरकीयासामान्यलक्षण एव सुरतगोपनकर्तृत्वं निवेश्य गुप्तालक्षणं विधेयम्, सुरतगोपनकर्तृत्वमात्रन्तु मुग्धायामतिव्याप्तम्। उपपतिसम्भोगोपयोगिवचनक्रियाऽन्यतरनैपुण्यं विदग्धात्वम्, पुंश्चलीभावनिपुणत्वं तदिति नव्योक्तं त्वस्फुटत्वान्न रमणीयम्। सत्स्वपि गोपनायासेषु जनताऽवगतोपपत्यनुरागत्वं लक्षितात्वम्, जारोपभोगनिमित्तकनानाकुलभ्रमणकारित्वं कुलटात्वम्, कुलानामटेति विग्रहे समासः, शकन्ध्वादिगणपाठात्पररूपम्। [1]कुलान्यटतीति विग्रहे तु कर्मण्यणि ङीबापत्तिः स्यात्। जारकुलयोरसंसर्गाच्च सामान्यायामतिव्याप्तिः। कुत्सितभाषित्वं कुलटात्वमिति लक्षणन्तु चिन्त्यमेव, बाल्यार्थकस्य लटधातोर्भाषणार्थकत्वाभावात्। धातूनामनेकार्थकत्वाभ्युपगमस्त्वगतिकगतिः, तदङ्गीकारेऽपि कुट्टिन्यादावतिव्याप्तिः। स्वोपपतिसम्भोगसामग्रीविशिष्टत्वस्वाधिष्ठितसङ्केतस्थलाधिकरणकोपपतिगमनानुमानप्रयोज्यत्वान्यतरसम्बन्धेन स्वविशिष्टतापवत्त्वमनुशयानात्वम्, सम्बन्धघटकवैशिष्ट्यन्तु स्वाभावप्रयोज्यत्व-स्वाभावशङ्काप्रयोज्यत्वान्यतरत्। इष्टहानिजनितानुतापवत्त्वं तदित्यनन्तभट्टोक्तलक्षणन्त्वननुगतम्, विहितानौचित्यप्रयोज्यखेदस्यैवानुतापत्वप्रसिद्धेः प्रकृतखेदस्य तत्त्वाभावेनासमञ्जसं च। स्वप्रयोज्यत्व-स्वसम्भावनाप्रयोज्यत्वान्यतरसम्बन्धेनोपपतिसम्भोगसामग्रीसंवलनविशिष्टानन्दवत्त्वं मुदितात्वम्, नायकलाभसम्भावनादिमत्तयाऽऽनन्दवत्त्वं तदिति नागेशभट्टकृतलक्षणन्त्वननुगमाक्रान्तमेव[2]।

गुप्तां विभजते—

---

[1] प्राचीनोक्ते।

[2] तेन स्वीयासामान्ययोरतिव्याप्तिरपि सम्प्राह्या।

गुप्ता त्रिधा ।

तिस्रो विधा दर्शयति—

वृत्तसुरतगोपना, वर्तिष्यमाणसुरतगोपना,

वृत्तवर्तिष्यमाणसुरतगोपना च ।

वृत्तस्य कृतपूर्वस्य, वर्तिष्यमाणस्य करिष्यमाणस्य, तदुभयस्य च सुरतस्य परपुरुषसम्भोगस्य, गोपनमपह्नवो यस्यामिति व्यधिकरणबहुव्रीहिः । प्रातिस्विकं लक्षणन्तु वृत्तमात्रोपपतिसम्भोगगोपकत्वं वर्तिष्यमाणमात्रोपपतिसम्भोगगोपकत्वं तदुभयतादृशसम्भोगगोपकत्वं च क्रमेणावगमनीयम् ॥

गुप्ताप्रकारानुदाहर्तुमाह—

त्रितयमपि यथा—

गुप्ताप्रकाराणामिति शेषः । वृत्तवर्तिष्यमाणं च सुरतं गोपयितुं कारणान्तरव्यपदेशने तच्चिह्नानि निह्नुवाना काचित्सखीं कथयति—

श्वश्रूः क्रुध्यतु विद्विषन्तु सुहृदो, निन्दन्तु वा यातरः,

तस्मिन् किन्तु न मन्दिरे सखि ! पुनः स्वापो विधेयो मया ॥

आखोराक्रमणाय कोणकुहरादुत्फालमातन्वती

मर्जारी नखरैः खरैः कृतवती, कां कां न मे दुर्दशाम् ॥ २२ ॥

हे सखि ! श्वश्रूः पतिप्रसूः, क्रुध्यतु आज्ञाभङ्गेन कुप्यतु, सुहृदो मित्राणि आलीजनाः विद्विषन्तु उपदेशाग्रहणेन अप्रीता भवन्तु द्वेषं वाऽऽचरन्तु, वा तथा, यातरो देवृदेवरपत्न्यो, निन्दन्तु वचनानुरोधेन गर्हयन्तु तत्सर्वं मया कथं चित्सोढव्यं किन्तु तस्माद्धेतोः तस्मिञ्छयितुमुषितपूर्वे मन्दिरेऽगारे मया पुनर्द्वितीयवारम् स्वापः शयनं न विधेयः कर्तव्यः, कुत इति चेद् यतः आखोर्मूषकस्य आक्रमणाय धर्षणाय हननाय कोणस्य गृहैकदेशस्य कुहराच्छिद्राद् बिलात् निर्गता तद्द्वारेण गृहं प्रविष्टा उत्फालमुत्प्लुतं कूर्दनम् आतन्वती नितरां विदधाना मार्जारी बिडाली खरैस्तीक्ष्णैः नखरैर्नखैः कां कां निर्वक्तुमशक्यामनुचितां वा नितम्बस्तनदलादिविलेखनात्मिकाम् मे मम

दुर्दशां दुरवस्थां न कृतवती अपि तु सर्वां चकारेत्यर्थः ।

तथा च 'पतिपत्न्योः' प्रसूः श्वश्रूः, 'उन्दुरुर्मूषिकोऽप्याखुः' इत्यमरः, 'भ्रातृवर्गस्य या जाया यातरस्ताः परस्परम्' 'बिडालश्चोतुर्मार्जारः' इति हैमः,

'कोणो वास्तुप्रभेदे स्याद्वीणादीनां च वादने । एकदेशे गृहादीनाम्' इति मेदिनी, 'मन्दिरं नगरेऽगारे' 'कुहरः कोटरे छिद्रे' इति विश्वश्च ।

अत्र सखीतिसम्बोधनेन रहस्यकथनौचित्येऽप्यपलापाद्विषयस्य गोपनीयतमत्वं, तेन परपुरुषानुरागवत्तया नयिकायाः परकीयात्वं सख्याः कथञ्चिदवगतरहस्यगोपकत्वं च, श्वश्रूपदेन पुत्रवधूसततभर्त्सनशीलायास्तस्याः कोपस्य सहनयोग्यता, तस्या अनुल्लङ्घनीयाज्ञता च, सुहृच्छब्देन सकृत्तदुपदिष्टाकरणापराधेऽपि रोषाभावः तदनुकूलाचरणस्यावश्यकत्वं च, यातृपदेन नैसर्गिकद्वेषेण तत्कृतनिन्दायाः सार्वदिकत्वान्मर्षणीयत्वं तासां सन्ततं छिद्रान्वेषणतत्परत्वं च, वाशब्देन श्वश्रूक्रोधादीनाममर्षणाभ्युपगमेन तन्मन्दिरस्वापस्य 'विषं भुङ्क्ष्व मा चास्य गृहे भुक्थाः' इतिवद् दुर्दशामूलत्वाद् दुःसहनमत्वम्, आखोरेकत्वाद्दुर्लभत्वम् तेनाक्रमणस्यौद्धत्यम् तावता नखक्षतानां भूयस्त्वं गाढता च, कोणकुहरपदाभ्यां सान्द्रतमसत्वेन जागरणेऽपि मार्जार्या दुर्लक्षता, अप्रतिविधानेन तद्बाहुल्यम् , मार्जारीति स्त्रीत्वनिर्देशेन तिरश्चोऽपि पुंसः सम्पर्को मम नाभूत् का कथा मनुष्यस्येति स्वीयमपुंश्चलीत्वम् , नखराणां खरतया तदीयक्षतानामतिस्फुटत्वेऽप्यशङ्कनीयता, किमो द्वित्वेन दुर्दशाया आभीक्ष्ण्यं , तेन क्लेशबाहुल्यमुखेन तदवस्थाया अमर्षणीयता, तावता तत्र स्वापस्य नितरामनभिमतत्वम् , समस्तश्लोकेन च विहितरतजनक्षतादीनां प्रमादशयितपूर्वमन्दिरस्थमार्जारीकृतत्वव्यपदेशेनापलापात् , विधास्यमानसुरतजनक्षतादीनामपि श्वश्र्वादिदुरभिनिवेशपारवश्यमूलकशयिष्यमाणमन्दिरस्थमार्जारीकरिष्यमाणत्वसम्भावनया गोपनाच्चात्मनो गुप्तात्वं च सूच्यते ॥

द्वितीयचरणार्थे परार्धार्थस्य हेतुतया काव्यलिङ्गालङ्कारेण स्वी-

यपरपुरुषं नखक्षतप्रकाशं सन्दिहानया नायिकया मार्जारीकृतत्वव्यपदेशने गोपनाद्

'व्याजोक्तिः शङ्कमानस्य च्छद्मना वस्तुगोपनम्'

इति लक्षिता व्याजोक्तिः संसृज्यते ॥

इदञ्च वृत्तवतिष्यमाणसुरतगोपनमेकैकमुभयञ्चादाय गुप्ताभेदे त्रयोदाहरणमिति प्राञ्चः। यत्तु तार्तीयीकभेदस्यार्थसमाजग्रस्तत्वमिहेति केचित्, तन्न, प्रकृते तस्यैव स्फुटतया प्राधान्यात्, इतरभेदयोरेव प्रत्युत लक्षणयोर्मात्रपदनिवेशेन व्यावर्त्यवतीह सङ्कतेरसम्भावाच्च ॥ २२ ॥

वाकक्रियाभ्यां विदग्धां द्विधा विभक्तुमाह—

विदग्धा च द्विविधा।

चस्त्वर्थे तावेव भेदावुद्दिशति—

वाग्विदग्धा क्रियाविदग्धा च।

तयोर्लक्षणं तु पूर्वमेवोक्तम्। तत्र प्राथम्याद्वाग्विदग्धामुदाहर्तुमुपन्यस्यति—

तत्र वाग्विदग्धा यथा।

तत्र तयोर्विदग्धयोर्मध्ये काचित्सहृदयं रिरंसुं वासार्थिनं पथिकं स्ववाग्वैदग्ध्यं विवृण्वती वासास्पदोपदेशच्छद्मना भङ्ग्या सम्भोगायामन्त्रयति—

निबिडतमतमालवल्लिवल्लीविचकिलराजिविराजितोपकण्ठे।
पथिक! समुचितस्तवाद्य तीव्रे, सवितरि तत्र सरित्तटे निवासः॥२३॥

हे पथिक! पान्थ! अद्यास्मिन्दिने सवितरि मिहिरे तीव्रे नभोमध्यस्थतया नितान्ततापजनकत्वात् तीक्ष्णे सति निबिडतमानतिशयघनान् तमालांस्तापिच्छान् वल्लन्ते वेष्टयन्तीति ता वल्ल्यो लताः तथा विचकिलानां मल्लीविशेषाणां राजयः पङ्क्तयः ताभिर्विराजितश्शोभितः उपकण्ठः सन्निहितप्रदेशो यस्मिंस्तादृशे; तत्र मार्गसान्निध्यात् प्रसिद्धे त्वदुषितपूर्वे वा सरितो

नद्याः तटे तीरे तव, निवासो वसतिः समुचितः सर्वथा योग्य इति बाह्योऽर्थः, आन्तरस्तु हे पथिक! पाणिगृहीतीचिरविरहाद्विरंसोत्सुक! अद्य सवितरि तीव्रे तत्र मत्सङ्केतीभूते मदङ्कस्थे वा निबिडतमतमालवल्लिसम्बन्धिन्या विचकिलराज्या मल्लीमालया विराजित उपकण्ठो यस्य तादृशे सरित्तटे नदीकूले नदीवद्दीर्घहारसन्निकृष्टे मम कण्ठसमीपे वक्षसि वा विराजितान्तं सम्बोधनं वा तव वासः समुचितः कामुकत्वात् सुसङ्गत इत्यर्थः।

तथाच 'निबिडं तु निरन्तरम्। निविरीशं घनम्' इति हैमः, 'तमालस्तिलके खड्गे तापिच्छे' इति मेदनी, 'वल्ली तु व्रततिर्लता' 'उपकण्ठान्तिकाभ्यर्णाः' इत्यमरः, 'स्मृतो विचकिलो मल्लीप्रभेदे' इति विश्वश्च।

अत्र पथिकत्वेनावासदेशौचिती, सुलभशीतलस्रोतस्विनीकूलावासशीलं सततपरिभ्रमणपरायणतया पाणिगृहीतीचिरविरहाद्विरंसौचित्यं सवितुस्तीव्रत्वेन सहजशीतलनदीकूलनिवासाऽऽस्यं तद्दशस्यातपतापत्रस्तजनसञ्चाररहित्यमुखेनोपभोगसाधनत्वं चाग्रिममार्गस्य विच्छायतया परमदुर्गमत्वेन तत्रैव वसतेः सर्वथा विधेयत्वं वा तमालत्वेन नैसर्गिककार्ष्ण्यद्वाराऽन्तस्तलस्य तिमिराच्छन्नता निबिडतमतया तदतिशयः ताभ्यां तत्रत्यव्यापाराणामितरजनालक्ष्यत्वेन शैत्योत्कर्षेण च चौर्यसम्भोगोपयोगिता तस्य तापातुरजनावश्याश्रयणीयता च वल्लिशब्देनाचेतनानामप्यालिङ्गनविधानेनोद्दीपकतमत्वम, वल्लिशब्देन प्रतानबाहुल्येन स्वेप्सितानुकूलत्वं तत्स्त्रीत्वनिर्देशेनात्मनोऽपि तद्वदाचरणौचित्यं विचकिलराजिविराजितत्वेन सौरभोत्कर्षेणोद्दीपनतैव तत्रेतितच्छब्देन प्रदेशस्य प्रसिद्धया पूर्वानुभवाद्वा निवासानौचित्यपरिहारद्वारेण स्वीयमौत्सुक्यम्, अद्येत्यनेनाद्यतननिवासस्यावश्यविधेयताद्वारा रागातिरेकः सन्तापातुराय शीतलस्थलनिवासोपदेशदानेन सदयत्वं, तेन स्वस्य सुचारित्र्यं तत्र पक्षपातश्च ततोऽपि गूढा तद्विषया रतिः विचकिलराजिपदस्य मल्लीमालाऽर्थकत्वे तु तस्या निबिडतमतमालसम्बन्धादातपासंसर्गादम्लानतया सौरभातिशयेन रमणीयता समुचितपदेन तत्र

निवासस्यौचित्येन अनशङ्कनीयत्वाभावादात्मनोऽपि मध्याह्न एव वि-धेयान्तरव्यपदेशेन तत्रागमनसम्भवः सम्पूर्णेन वाक्यप्रबन्धेन गुप्त-स्य परपुरुषसम्भोगमनोरथस्य स्वभङ्गया प्रकाशनात्स्वस्य वाग्विद-ग्धात्वं च व्यज्यते, आदिमचरणद्वये दीर्घसमासेन बन्धस्य गाढत्वेऽपि—

'असमस्तैकसमस्ता युक्ता दशभिर्गुणैश्च वैदर्भी।
वर्गद्वितीयबहुला स्वल्पप्राणाक्षरा च सुविधेया ॥'

इति रुद्रटानुशासनेन शृङ्गाररसव्यञ्जकाल्पप्राणवर्णबाहुल्येनाव-श्यकदशगुणीघटकौजोगुणद्योतकसमासद्राघिम्णा च वैदर्भी रीति-रेव, गौडी तु न केवलं समासाधिक्येनैव किन्तु रौद्रादिरसव्यञ्जकानां वर्णानां परुषसन्निवेशेन, तत्तद्रसोपकारितयैव रीतीनां जीवनसार्थकयात्, सरित्तटविशेषणस्य साभिप्रायत्वेन परिकरोऽलङ्कारः। क्वाद्य मम निवासो योग्यः? इति पथिकप्रश्नस्य नायिकोत्तरेणोन्नयनात्,

'प्रश्नस्योत्तरादुन्नयो यदि। यच्चासकृदसम्भाव्यं सत्यपि प्रश्न उत्त-रम्' इति विश्वनाथेन लक्षित उत्तरालङ्कारश्च ॥ २३ ॥

अथ क्रियाविदग्धोदाहरणार्थमाचष्टे—

क्रियाविदग्धा यथा—

का चित्सखी परकीयायाः क्रियाकौशलं पश्यन्ती काञ्चिदाह—

दासाय भवननाथे बदरीमपनेतुमादिशति ॥
हेमन्ते हरिणाक्षी पयसि कुठारं विनिक्षिपति ॥ २४ ॥

भवननाथे केवलं गृहस्वामिनि न तु प्रेयसि बदरीम् परपुरुष-समागमसङ्केतभूतान्तस्तलां कोलतरुम् अपनेतुं तत्तत्रमूलस्य कथञ्चिदुन्नयनाद् उन्मूलयितुमादिशत्याज्ञापयति सति हरिणाक्षी सङ्केतभङ्गभयेन कुठारगोपनस्थलालब्धिप्रयोज्यसम्भ्रमेण वा मृगोपम-चपललोचना हेमन्ते शिशिरपूर्वर्तौ पयसि गृहपरिखावाप्या जले न तु तीरे कुठारं बदरीवृक्षच्छेदकं स्वधितिं विनिक्षिपति गुप्तं निद-धातीत्यर्थः, हेमन्ते शैत्याक्रान्तः कोऽपि न वापीजले तमन्वेष्टुं प्रवेक्ष्य-तीति मम सङ्केतभङ्गो नैव स्यादिति भावः।

तथा च—'कैवर्तभृत्ययोर्दास इति रभसः, बदरीकोलाचिति मेदिनी, 'द्वयोः कुठारः स्वधितिः' इत्यमरश्च

अत्रादेशाभिप्रायेण सम्प्रदानत्वाद्दासायेति चतुर्थी भवननाथ-शब्देन भर्तुः केवलगृहपरिवृढत्वेन प्रणयानभिज्ञतया ततोऽपरक्तायाः सरसपुरुषान्तरे प्रीतेरौचिती, दासत्वेन स्वाम्यादेशाविलम्बविधायित्वं, तेन झटिति बदरीमूलोच्छेदस्यावश्यम्भावसम्भावनया कुठारगोपने शीघ्रतायाः समौचित्यं, बदरीत्वेन कण्टकबहुलतया जनसञ्चरणानर्हत्वेन निरापत्सङ्केतभूमित्वं, स्त्रीत्वनिर्देशेन तत्कृतनिरातङ्कसम्भोगसम्पादनलक्षणकृतिस्मरणप्रयोज्यः स्वजातिनिबन्धनो वा पक्षपातः, एकवचनेनैकस्या एव तस्याः परिमण्डलतया कुञ्जप्रायत्वादन्यानपेक्षपरपुरुषसम्भोगसम्पादनाद्भवननाथस्य तत्र द्वेषः तेनावश्यापनेयतया नीतिनैपुण्यं, नायिकायास्तु परमोपकारकत्वात्तद्रक्षणे समुचितोऽभिनिवेशः, क्रियावैदग्ध्यं च, अपनयनेन बदर्याः पुनरनुत्पत्तिमूलमामूलोच्छेदनम्, आदेशतया तदर्थस्यावश्याचरणीयत्वं, शतृप्रत्ययेनादेशसमकालमेव कुठारनिक्षेपे त्वराऽतिशयः, तेन बदरीच्छेदे नितरामनभिमतिः पयसि प्रक्षेपेण कुठारस्य दासकर्तृकस्थितिसम्भावनाऽभावः, कृतायामपि कथञ्चित्सम्भावनायां हेमन्तशब्देन तत्र पयसः शैत्याधिक्येन कुठारान्वेषणाय प्रवेशासम्भवः, प्रवेशेऽपि जाड्यातिशयेन चिरं गवेषणाविरहः ततः शीघ्रं कुठारालब्ध्या कियत्कालानन्तरं भर्तुः कार्यान्तरव्यासङ्गेन तद्विस्मरणेन तच्छेदनाभावसम्भावना दृक्चपलतोपलक्षकहरिणाक्षीपदेन तन्निदानभूतौ भीतिसम्भ्रमौ, ताभ्यां बदरीरक्षणे समादरः, तेन परपुंस्यनुरक्तिः, विनिक्षेपेण कुठारस्यान्वेषणेऽपि दुष्प्रापत्वं, नायिकायाः क्रियावैदग्ध्यञ्च द्योत्यते।

भवननाथ इति परिकरालङ्कारेण सङ्कीर्णं काव्यलिङ्गमलङ्कारः।

'आर्याद्वितीयकेऽर्धे यद्गदितं लक्षणं तत् स्यात्।
यद्युभयोरपि दलयोरुपगीतिं तां मुनिर्ब्रूते'
इति केदारोक्तलक्षणमुपगीतिच्छन्दश्च॥ २४॥

अथ लक्षितामुदाहर्तुमुपक्रमते—

लक्षिता तथा—

सुविदितरहस्यचरिता सखी वृथा तद्गोपनार्थमायस्यन्तीं नायिकां

सोत्प्रासमाह—नायिकैव वा परोक्षे कृतरहस्यप्रकाशां समन्तन्तु कृतकं रहस्यं गोपयितुं यतमानां सखीं सपरिहासं कथयति—

यद्भूतं तद्भूतं यद्भूयात्तदपि वा भूयात् ॥
यद्भवति तद्भवति वा विफलस्तव कोऽपि गोपनायासः ॥ २५ ॥

हे मद्विदितपूर्वस्वरहस्यवृथागोपनायासकारिणि ! यद्वा अयि मदेकहितचिन्तकम्मन्ये ! रहस्यं स्वयं प्रकाश्यापि मद्वञ्चनार्थं तथा तद्पह्नवाय यतमाने ! यद् भूतं पूर्वमेव निष्पन्नं तद् भूतं जातं न्याय्यं सत्यं वा, वा पुनः, यद् भूयाद् अतः परम् भवेत् तदपि भवितव्यस्यानिवारणीयत्वाद् भवेद्, वा तथा यत् सम्प्रति भवति जायते तद्भवति इति हेतोः तव नायिकायाः सख्या वा कोऽपि भूयस्त्वादुत्कटत्वाद्वा विशिष्य वक्तुमशक्यः गोपनायासः रहस्यनिह्नवप्रयत्नः विफलः जनैर्मया वा स्फुटं लक्षितत्वाद् निरर्थक इत्यर्थः । सख्युक्तिपक्षे मामनामन्त्र्यापि त्वया यत्कृतं तत्कृतमेव तत्फलमपि निश्चितं भवेदेव दुरभिनिवेशादिदानीमपि परपुरुषानुबन्धनं यत्क्रियते तत्क्रियत एवेति किं तन्मत्तोऽपि गोपायसि अहन्तु सर्वं जानामीति भावः, नायिकोक्तिपक्षे तु "विघ्नैर्मुहुर्मुहुरपि प्रविहन्यमानाः प्रारब्धमुत्तमजना न परित्यजन्ती"ति नीत्या प्रारब्धपूर्वः परपुरुषानुषङ्गः कथमपि न हास्यते तद् वृथव ते तद्गोपनप्रयत्नः, यद्वा यदा मदीयरहस्यं लोके प्रख्यातमेव तदाऽलं ते तद्गोपनप्रयासः, यद्वा यदि स्वयं त्वयैव मच्चरितं परत्र प्रकाशितं तर्हि किमग्रे मद्वञ्चनाय साम्प्रतं तवपह्नवायासं व्यर्थं करोषीति भावः ।

तथा च—'भूतं क्ष्मादौ पिशाचादौ न्याय्ये सत्योपमानयोः' इति विश्वः, 'यत्नः प्रयत्न आयासः' इत्यभिधानञ्च,

इह द्वितीयभूतभूयाद्भवतिपदानि पुनरुक्त्यभावाय 'काकः काकः पिकः पिकः' इतिवत् क्रमेणानित्यत्वानिवार्य्यत्वावश्यविधेयत्वरूपार्थान्तरेषु संक्रान्तानीत्यर्थान्तरसंक्रमितवाच्यध्वनयः, आयासपदेन यत्नस्य द्राधिम्णः स्वरहस्यस्य प्रकाशेऽपि निश्शङ्कं प्रौढताऽभ्युपगमान्नायिकायां लक्षितात्वस्य च ध्वनिः ।

"आक्रोशे नञ्यनिः" इति सूत्रस्थले काशिकोक्तप्रत्युदाहरणस्य "मृतिस्ते वृषल भूयाद्" इति दर्शनाद् "आशिषि लिङ्लोटौ" इत्यत्र शुभेच्छैव नाशीःपदार्थः, किन्त्विच्छामात्रं, तेन प्रकृते शुभेच्छाया विरहेऽप्याशिषि लिङ्।

अनुप्राससंसृष्टं काव्यलिङ्गमलङ्कारः। नर्मस्फोटस्य तु "नर्मस्फोटस्तु भावांशैः सूचितोऽल्परसो भवेद्" इति शिङ्गभूपतिवचनात्कैशिक्यङ्गतया नास्यालङ्कारत्वं न तूपमादिश्रेणीप्रवेशः।

'आर्याशकलद्वितयं व्यत्ययरचितं भवेद् यस्याः।
सोद्गीतिः किल कथिता तद्वद्यत्यंशसंयुक्ता'॥

इति वृत्तरत्नाकरोक्तलक्षणमुद्गीतिच्छन्दश्च ॥ २५ ॥

इदानीं कुलटोदाहरणार्थमुपन्यस्यति—

कुलटा यथा—

बहुलपुरुषाभावेन सम्भोगभरमलभमाना का चित्कामुकी विधिमुपालभते—

एते वारिकणान् किरन्ति पुरुषान् वर्षन्ति नाम्भोधराः
शैलाः शाद्वलमुद्वमन्ति न सृजन्त्येते पुनर्नायकान्॥
त्रैलोक्ये तरवः फलानि सुवते नैवारभन्ते जनान्
धातः! कातरमालपामि कुलटाहेतोस्त्वया किं कृतम्॥ २६॥

हे धातर्विधे! यत एते दृश्यमानाः अम्भोधरा मेघाः वारिकणान् पयोबिन्दून् किरन्ति व्यर्थं परितः क्षिपन्ति किन्तु कुलटोपकाराय पुरुषानुपभोगक्षमपुंसः न वर्षन्ति, तथा एते शैलाः पर्वताः शाद्वलं नवतृणम् उद्वमन्त्युत्पादयन्ति किन्तु नायकाननात्मश्लाघादिगुणविशिष्टयुवपुरुषान् न सृजन्ति जनयन्ति, तथा त्रैलोक्ये त्रिभुवने तरवो वृक्षाः फलानि सस्यानि सुवते उद्भावयन्ति किन्तु जनान् कुलटासन्तोषकपुरुषान् नैवारभन्ते जनयन्ति, ततः कुलटाया बन्धक्याः हेतोर्निमित्तं त्वया किं कृतमाचरितम् अपि तु न किमपि कृतं, यद्वा किं कुत्सितम् मेघादिजनितवारिकणादीनां परमोद्दीपन-

तया प्रतिकूलं कृतम् इति कातरं सावेग्य यथा स्यात्तथा आलपा-न्युपालभ इत्यर्थः ।

तथा च—'वार्वारि कं पयः, बन्धकी कुलटा मुक्ता' इति धनञ्जयः, 'अधीरे कातरः' इत्यमरः, लाभे सस्ये शराद्यग्रे व्युष्टौ च फलके फलम्' इति शाश्वतः, 'गिरिः पर्वतो धरः शैलः' इति वररुचिश्च ।

अत्रोद्गमतेरुत्पादने लाक्षणिकत्वान्नाश्लीलत्वदोषः, तदुक्तं दण्डिभट्टेन—

'निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम् ।

अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते' इति ॥

न 'सृज्यन्त्येते पुनः' इत्यत्र 'सूर्य्यश्चै'रित्यनेन द्वात्रशवर्णे कृता-नियतेर्यतेर्भङ्गस्तु 'लभेत सिकतासु तैलमपि यत्नतः पीडयन्' इति भर्तृहरिप्रभृतिप्रयोगोपलब्धेः कथञ्चिन्मर्षणीयः, निमित्तपर्य्यायत्वाद्धे-तुशब्दात्पञ्चमी, 'शाद्वलः शाद्दहरिते' इत्यमरकोशेन शाद्वलशब्दस्य हरिततृणवत्प्रदेशे शक्तबोधनेऽपि प्रकरणपारवश्येन हरिततृणे लक्षणा, न चैवं नेयार्थता, शक्यसम्बद्धार्थस्यैवोपस्थापनात् ।

धातरिति सम्बोधनेन तस्यानायासेन निखिलपदार्थसार्थसृष्टिक्षम-त्वेऽपि कुलटोपयोगिजारासर्जनाक्षिदंयत्वात् सर्वापकारकत्वपक्षपाति-त्वानि, तैरसूयात्मको भावः, अम्भोधरनाम्ना मेघानां लोकोपकारित्व-प्रसिद्धावप्यकिञ्चित्करत्वाद्धारवाहित्वमात्रं, ततोऽप्यसूयैव, बहुवचनेन मेघसमुदायस्यापि तत्रासामर्थ्येनासूयाऽतिशयः, वारिकणानां विकिर-णेनानुपयोगित्वाद् द्वेषः, तद्विकिरणेन मेघेष्वपि स एव, पुरुषपदेनोप-भोगक्षमता, तया बहुवचनार्थबहुत्वेन च सम्भोगतृष्णाया अशान्तिः, तया नायिकायाः कुलटात्वं, शैलशब्देन काठिन्यमुखेन निष्करुणता, तयाऽसूया, उद्गमनशब्देन शाद्वलोत्पादनस्य स्वानुपयोगितया गर्हितत्वं, त्रैलोक्यपदेन कल्पवृक्षाणां तु सर्वसृष्टिसामर्थ्यसत्त्वेऽपि पुरुषानुद्भाव-नात्कृपणता, तयाऽप्यसूया, नायकशब्देन वैदग्ध्यीप्रभृतिगुणवत्त्वम्, मेघपर्वततरूणां स्वाभाविकपरोपकारित्वप्रसिद्धावपि साम्प्रतं तदविधा-नाद्दात्मनो दौर्भाग्यं, तादृशाकिञ्चित्करमेघादिनिर्मातृतया धातृविषयको द्वेषश्च सूच्यते । काव्यलिङ्गमलङ्कारश्च ॥ २६ ॥

अनुशयानायास्त्रैविध्येन पूर्वं विभागं दर्शयति—

अनुशयाना यथा—वर्तमानस्थानविघटनेन भाविस्थानाभावशङ्कया स्वानधिष्ठितसङ्केत*स्थलं प्रति भर्तुर्गमनानुमानेन चानुशयाना त्रिधा ।

विद्यमानस्य सङ्केतस्थलस्य विद्रुतत्वात्सन्तप्यन्तीत्येकविधा, भविष्यतः सङ्केतध्वंसस्य संशयेन खिद्यमानेति द्वितीयः प्रकारः, स्वेन नायिकयाऽनधिष्ठितस्थलमनासादितस्थानं प्रति भर्तु†र्जारस्य गमनानुमा‡नेन समासादनज्ञानेन च दूयमानेति तृतीयः प्रभेदः । उदाहर्तुमुपक्रमते—

प्रत्येकमुदाहरणानि यथा—

भेदत्रयस्य क्रमेणोदाहरणत्रयमित्यर्थः । प्रथमानुशयानायाः स्थितिं का चिद्वक्ति—

समुपागतवति चैत्रे निपतति पत्रे लवङ्गलतिकायाः ॥
सुदृशः कपोलपाली शिव शिव तालीदलद्युतिं लभते ॥ २७ ॥

चैत्रे मधौ मासि समुपागतवति समुपस्थिते सति लवङ्गलतिकायाः सङ्केतकुञ्जावरणदेवकुसुमप्रततेः तदभिधया प्रसिद्धस्य लताविशेषस्य वा, पत्रे दलसमुदये निपतति वसन्तस्वभावात्पाण्डुभूय विगलति सति, सुदृशो रमणीयेक्षणायाः, कपोलपाली गण्डस्थली शिव शिव खेदः तालीदलस्य तृणद्रुमविशेषद्युतिं पाण्डुकान्तिं लभते प्राप्नोतीत्यर्थः ।

वर्तमानसङ्केतनिकेतनीभूतलवङ्गलताकुञ्जविप्लवजन्यसन्तापात्तस्याः कपोलौ पाण्डू बभूवतुरिति भावः ।

तथा च—'चैत्रो मधुः' इति हैमः ।

'लवङ्गं देवकुसुमम्' 'तालो खर्जूरी च तृणद्रुमाः' इत्यमरश्च ।

इह सङ्केतविघटकत्वेन चैत्रेऽसूया, कन्प्रत्ययार्थानुकम्पया चौ-

---

* कामिनोः सङ्गमाय निश्चितः प्रदेशः सङ्केतः क्षेत्रवाटीभग्नदेवालयप्रभृतिस्थानम् ।

† जारस्यापि भरणकर्तृत्वाद्भर्तृत्वम् ।

‡ अनुमानशब्देन ज्ञानमात्रं विवक्षितम् , इतरथा तत्र नायकोपगतेः प्रत्यक्षशाब्दाभ्यामनुशयानायाः संग्रहो न स्यात् ।

र्य्यरतस्थलोपयोगेन लवङ्गलतायां पत्रपातः, तेन तत्पराभवे विषादौचित्यं, शतृप्रत्ययेन लतादलविगलनकपोलपाण्डिम्नोः सहभावित्वद्वारा लताया प्रेयस्त्वं, तेन तदुपपादक चौर्य्यरतम्, इष्टहानिजनितविषादवत्त्वान्नायिकायाः प्रथमानुशयानात्वं, सुदत्त्वेन विचारप्रावीण्यं, तेनेष्टविघटनेन विषादस्यौचिती, कपोलपाल्याः स्त्रीत्वात्सजातीयतया समदुःखघत्त्वोपपत्तिः, शिव शिवेत्युक्त्या खेदाधिक्यं, तालीति स्त्रीत्वेन साजात्यात्कपोलपाल्यास्तालद्युतिलाभे बृहदायासाभावः, दलपदेन पत्रस्याभ्यन्तरतया पाण्डुताऽतिशयः, तेन तदीयद्युतेरन्यासुलभत्वं, कपोलस्थल्यास्तल्लाभेन नितरां विरहकातरता, लटा पाण्डिमलाभस्य विद्यमानत्वेन तदाधिक्यं, नायिकानिष्ठरतेः परपुरुषविषयकत्वेन विप्रलम्भरसाभासश्च ध्वन्यते ।

निपतितपत्र इति बहुव्रीहौ चैत्रविशेषणतया व्याख्याने तु चैत्रोपागमनापेक्षयाऽपि लतापत्रपातस्य साक्षादिष्टविघातकत्वेन विधेयतौचित्यादप्राधान्यं दुस्सहं स्यात्, पत्र इति जातावेकवचनं, तेनैकमात्रपत्रपातेन सङ्केतहानेरसम्भवात् खेदानुपपत्तेरस्मद्व्याख्यानस्य नासामञ्जस्यम् ।

तालीदलवृत्तिद्युतिलाभः कपोलपाल्या असम्भवन् सादृश्ये पर्य्यवस्यतीति निदर्शनाऽलङ्कारः ।

'आर्य्याप्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः ।
दलयोः कृतयतिशोभां तां गीतिं गीतवान् भुजङ्गेशः' ॥
इत्युक्तलक्षणं गीतिच्छन्दश्च ॥ २७ ॥

पतिगृहं नीयमानां तत्र चौर्य्यरतोपयोगिस्थललाभाभावशङ्कया खिद्यमानां द्वितीयानुशयानां काचिद्भङ्ग्याऽऽश्वासयति—

निद्रालुकेकिमिथुनानि कपोतपोत—
व्याधूतनूतनमहीरुहपल्लवानि ॥
तत्रापि तन्वि ! न वनानि कियन्ति सन्ति
खिद्यस्व न प्रियतमस्य गृहं प्रयाहि ॥ २८ ॥

हे तन्वि ! कोमलाङ्गि ! तत्र भर्तृवसतावपि निद्रालूनि स्वापशी-

लानि केकिनां प्रशस्तकेकावतां मयूराणाम् मिथुनानि स्त्रीपुंसद्वन्द्वानि यत्र तानि, कपोतानां पारावतानाम् पोतैः शावकैः व्याधूताः कम्पिता नूतनाश्च ते महीरुहाणां तरूणाम् पल्लवाः किसलया येषु तथाविधानि स्वच्छन्दविहारयोग्यानि कियन्ति कति वनानि गृहपरिसरकाननानि न सन्ति अपि तु सन्त्येव; तत्र ते मनोरथाः सेत्स्यन्त्येव, अतस्त्वम् मा न हि खिद्यस्व खेदं कुरु किन्तु सुखेन प्रियतमस्य पत्युः गृहं सदनम् प्रयाहि प्रतिष्ठस्वेत्यर्थः ।

तथा च—'स्वप्नक् शयालुर्निद्रालुः' इति हैमः ।

'मयूरो बर्हिणः केकी' इति धनञ्जयः ।

'मिथुने युग्मदम्पती' इति शाश्वतः ।

'पारावतः कलरवः कपोतः', 'पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः' इति अमरकोशश्च ।

इह तन्वीति सम्बोधनं तानवहेतुं चिन्ताऽतिशयं, स चोपपतिभाविमिलनस्थानाभावसम्भावनामात्मनो जननीं, स तु नायिकाया द्वितीयानुशयानात्वमपि, पितृवेश्मनि सङ्केतस्थलबहुलतां, केकिपदमन्यत्र मयूराणां सुश्रवकेकोच्चारणपरायणत्वं, तत्र त्वपरिचितजनसांनिध्यात्स्वभावाद्विभ्यतामप्यालुच्प्रत्ययो नितरां निद्रितत्वम्, मिथुनपदं मिथोविरहासहिष्णुस्त्रीपुंससङ्गमसम्भूतोद्दामसुरतश्रमशिथिलाङ्गानां गाढनिद्रां, तेन च निश्शङ्कचौर्यकेलिसौकर्य्यं, कपोतपदं सर्वदा कलरवकारिताम्, पोतपदं तु लोलतया तदाधिक्यं, तेन वनानां कपोतपोतकलरवपूरणान् मनुष्यसञ्चरणचरणस्वनशिञ्जितमणितादिध्वनिमत्त्वेन लोकैरलक्ष्यतां, सा तु मुहुरागमनयोग्यताद्वारा पूर्ववत्परकामुकसङ्गमसौगम्यमेव, तच्च विद्यमानखेदस्यानौचित्यम्, पुनः समस्तं वनविशेषणयुगलक्रमेण नायिकाऽऽलिङ्गितजारसुप्तिं जारकर्तृककलकण्ठकूजनसाशङ्कम्पकरचेष्टाकरणकनायिकारमणे च, बहुवचनं कियत्पदं च वनबाहुल्यं द्वारीकृत्यानायासतः स्वाभीष्टपूर्तिसम्भवात्खेदाभावस्यौचित्यं, नेति कालबहुवनसद्भावं, लट्लकारो वनानां वर्तमानत्वेन निर्माणायासाभावं, लोट्लकारद्वयं क्रियाद्वयस्यावश्यं झटिति विधेयतां च व्यनक्ति ।

ये तु प्रियतमपदे 'अल्पात्तरम्' इति वत्स्वार्थिकतमपमुपकल्प्य नायिकाया जारासक्तचेतस्तया भर्तरि प्रणयातिशयाभावं व्यङ्ग्य व्याचक्षते, तैर्लोके स्वार्थिकतमपोऽनुपलब्धेः तदुक्तव्याजोक्त्यलङ्कारोपपत्तये वाच्यतादृशायां भर्तरि प्रेमातिरेककथनौचित्यस्य च कृते किमपि वक्तव्यम् ।

अत्रिवृत्त्यनुप्रासससंसृष्टो व्याजोक्त्यलङ्कारो वक्त्र्या हितोपदेशकत्वेन सौहार्दं ध्वनयति ॥ २८ ॥

स्वयं रसालतले सङ्केतं कृत्वाऽपि कार्यान्तरव्यासङ्गेन गन्तुमपारितवतीं श्रीराधां हेपयितुमायातस्य रसालमञ्जरीसनाथकर्णस्य श्रीकृष्णस्य तत्र गमनं स्वीयञ्च गमनाभावमवगम्य खिद्यमानायास्तृतीयानुशयानायाश्चरितं काचिद्वर्णयति—

कर्णकल्पितरसालमञ्जरीपिञ्जरीकृतकपोलमण्डलः ॥
निष्पतन्नयनवारिधारया राधया मधुरिपुर्निरीक्ष्यते ॥२९॥

कर्णे श्रवसि कल्पिता सङ्केतस्थले मया गतमिति राधाया बोधनाय भङ्ग्या स्थापिता या रसालस्य चूतस्य मञ्जरी नवप्रसूनोद्भेदो न तु पुष्पगुच्छविशेषस्तस्य स्तबकत्वात् तया पिञ्जरीकृतं परागसंसर्गात् पीतीकृतं कपोलस्य गण्डस्य मण्डलं बिम्बं यस्य तादृशो मधोर्दैत्यस्य रिपुः शत्रुः श्रीकृष्णः, निष्पतन्ती सङ्केते स्वानुपस्थितिजन्यविषादेन निर्गलन्ती नयनवारीणामश्रूणां धाराप्रवाहो यस्यास्तया श्रीराधया निरीक्ष्यते किङ्कर्तव्यताविमूढया दृश्यत इत्यर्थः ।

तथा च—"आम्रश्चूतो रसालोऽसौ" इत्यमरः । 'पीते च पिञ्जरः' इति विश्वः । 'मण्डलं बिम्बे' इति शाश्वतश्च ।

अत्र मञ्जर्याः कर्णे स्थापनया दूरादपि लक्ष्यतामुखेनैतन्मञ्जर्या इव त्वद्गिरोऽपि श्रवणगोचरतया कर्णभूषणत्वमात्रमेव न तु तत्प्रतिपालनमपि, यतोऽनयेव सङ्केतं स्वयं विधायापि न गताऽसीति नायिकां प्रत्युपालम्भः, कल्पितत्वेन मञ्जर्या अक्लिष्टविलक्षणस्थितिः, तया श्रीराधायाः पुरस्तत्प्रकाशनौचिती, रसालपदेन सरसत्वाद्दरोद्दीपनत्वम्, मञ्जरीशब्देन मकरन्दपरिमलयोरतिरेकः, तेन

मञ्जर्यां दूरतोऽपि वेदनीयतयोद्दीपनत्वं च, स्त्रीलिङ्गेन तु स्त्रियैव स्त्रीजातेः प्रत्यायनं झटिति सुकरमित्युपपत्तिः, पिञ्जरीभावेन यत्र मञ्जरीमप्राप्नुवतोऽचेतनस्य गण्डस्यापि विरहावसादात्पाण्डिमा, तत्र का कथा सचेतसो ममेति नेतुर्दौस्थ्यमर्थापत्त्यलङ्कारश्च, निरा धारा-शब्देन चाश्रुपातस्याविच्छिन्नतामुखेनानुतापवैपुल्यम्, मधो रिपुतया श्रीकृष्णस्यानुभावबाहुल्यं, तेन तद्वञ्चनाऽनौचित्यं, तेन दैवात्तद्भवने खेदद्राघिमोपपत्तिः, यद्वा मधोः सूदकत्वेन कठिनहृदयत्वं चण्डत्वं च, ततः सङ्केतवञ्चनरूपतदपराधविधानेन यद्वा दण्डदानाशङ्कया नय-नवारिधारापातनिमित्तीभूता भीतिः, दर्शनमात्रेण श्रीकृष्णाशयावग-मनचित्तकर्तव्यान्तरानवधारणामूलकं स्तैमित्यं, झटिति श्रीमधुसू-दनतनोर्दृशोर्निवर्तयितुमशक्यतया तदीयसौन्दर्यातिशयश्च सूच्यते ।

इदं पुनर्वस्तुरूपं वाच्यानतिशायिव्यङ्ग्यमादाय—

'ग्रामतरुणं तरुण्या नववञ्जलमञ्जरीसनाथकरम् ।
पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया' ॥

इतिवद्गुणीभूतव्यङ्ग्यकाव्यम्, प्रदीपकृत्सिद्धान्तानुकूलं प्राधा-न्येन भासमानं पार्यन्तिकास्वादमूलं विप्रलम्भाभासमादाय तु ध्वनि-काव्यमेव । वस्तुतस्तु श्रीराधायाः परकीयात्वाभावस्य 'भागवत-प्रदीपराधापरिणययोः' अस्माभिर्व्यवस्थापितत्वाद्विभावनामूलकमे-वैतदुदाहरणं, तेन नायिकान्तरसम्बन्धेनोदाहरणदानमुचितं प्रति-भाति, इह तु स्वयं विप्रलम्भ एव रसः, रतेरनौचित्यप्रवृत्त्यभावाद् मिथश्चक्षुर्मिलनादिप्रमाणोपलब्धौ तु सम्भोगशृङ्गार एव व्यज्यते ।

श्यामस्यापि श्रीकृष्णगण्डमण्डलस्यातिपीतमञ्जरीसम्पर्केण पीतिमा-ङ्गीकरणात् 'स्वगुणत्यागादत्युत्कृष्टगुणस्वीकारस्तद्गुणः' इति 'रुय्यक'-लक्षिततद्गुणसङ्कीर्णानुप्राससध्रीचीनः प्राचीनसूक्ष्मालङ्कारः ।

'रात्परैरनलगै रथोद्धता' इति वृत्तरत्नाकरोक्तलक्षणं रथोद्धता-च्छन्दश्च ॥ २९ ॥

प्राप्तावसरां मुदितामुदाहर्तुमाह—

मुदिता यथा—

पतिपरिवारस्यापाटवं निशम्य श्वशुरगृहे स्वैरमुपपतिक्रीडां च

सम्भाव्य मुदितायाश्चरितं काऽपि सविस्मयं प्रतिवेशिनीं न तु पथिकं तस्याप्रतीतत्वात् कथयति—

गोष्ठेषु तिष्ठति पतिर्बधिरा ननन्दा
नेत्रद्वयस्य न हि पाटवमस्ति यातुः ॥
इत्थं निशम्य तरुणी कुचकुम्भसीम्नि
रोमाञ्चकञ्चुकमुदञ्चितमाततान ॥ ३० ॥

पतिर्भर्ता गोष्ठेषु ग्रामादपि बहिः गोव्रजेषु तिष्ठति रात्रिन्दिवम् आस्ते न तु कदाचिद् गृहमागच्छति, तथा ननन्दा भर्तुर्भगिनी बधिरा श्रवणेन्द्रियशून्या एडाऽस्ति, किञ्च यातुर्देवृपत्न्याः देवरपत्न्याः स्वस्मात्पूर्वमागमनसम्भवाद् नेत्रद्वयस्य लोचनयुगलस्य पाटवं कौशलं रूपग्रहणक्षमत्वं हि निश्चयेन नास्ति, इत्थममुना प्रकारेण तत्रत्यवृत्तं तरुणी युवती निशम्य कुतोऽपि श्रुत्वा कुचौ कुम्भाविव यद्वा करिकुम्भा इव तयोः स्तनकलशयोः सीम्नि प्रान्ते उदञ्चितमुच्चैर्विराजमानं रोमाञ्चो रोमहर्ष एव कञ्चुकश्चोलकः तम् आततान विस्तारयामासेत्यर्थः।

तथा च—'व्रजः स्याद् गोकुलं गोष्ठम्' इति वैजयन्ती। 'भर्तुः स्वसा ननन्दा स्याद्' इति धनञ्जयः। 'अकर्ण एडो बधिरः' इति हैमः। 'निशाम्यतीति श्रवणे तथा निशामयत्यपि' इति भट्टमल्लः। 'द्विपाङ्गे च कुम्भम्' इति विश्वः। 'रोमाञ्चो रोमहर्षणम्' इत्यमरः। 'कञ्चुके वारवाणे स्यान्निर्मोके करभेऽपि च। वर्धापके गृहीताङ्गस्थितवस्त्रेऽपि चोलके' इति मेदिनी च।

अत्र पतिपदं केवलपोषणकर्तृतया प्रेमाविषयत्वं, सा परपुरुषानुरागौचित्यं, गोष्ठस्थितेः पत्युर्गोसहवासेन जाड्यमान्द्ये, तेन तत्र प्रणयानौचित्यं, बहुवचनं गोष्ठानां बाहुल्येन रात्रिन्दिवं तत्र स्थितिं, सा च गृहस्य शून्यतया निश्शङ्कोपपतिकेलिसम्भावनोद्भूतहर्षं, न नन्दति भ्रातृजायामिति विग्रहवन्ननन्दृपदं स्वविषयकश्वश्रूतिकद्वेषं, बधिरता सहजतादृशद्वेषवत्त्वेऽपि दोषज्ञानासामर्थ्यादपकाराक्षमत्वं तदाऽऽनन्दोपपत्तिं, यातृपदं स्वाभाविकद्वेषमेव, न चेति

पाठे चकारो बधिरताम, आन्ध्यं बधिरतां च पूर्ववदपकारासामर्थ्यद्वारा प्रमोदौचितीम्, इत्थंपदं तत्केलिसमर्पकसुकरप्रकाराणां बाहुल्यं, निशमनं श्रवणस्य सस्पृहत्वं, तरुणीपदमुपपतिना स्पृहणीयतां, नवयौवनेन कामोद्रेकात्कुलधर्मत्यागेऽविवेकं, सुरतावश्यम्भावञ्च, कुचयोः कुम्भौपम्यं काठिन्यपीनते, तेन नितरां कामुकीत्वेन कर्तव्याकर्तव्यविवेकविरहं, सीमशब्दः कुचपरिसरे कामातिरेकात्कामं रोमाञ्चोपपत्तिं, कञ्चुकत्वारोप उदञ्चनञ्च रोमाञ्चस्य सान्द्रतामन्यावगम्यतां च, तेन चामोदविशेषं, स च नायिकाया भाविसुरतसम्भावनया मुदितात्वं वस्तु शृङ्गाररसाभासञ्च सूचयति।

मूकत्वं तु नैव बधिरत्वस्य व्याप्यं, भूयो व्यभिचारदर्शनात्, सङ्केतकरणस्यैव प्रकृतेऽसङ्गत्या प्रतिबन्धकदर्शनादर्शनयोर्विचारो न समीचीनः अनुपयोगात्, कुचौ कुम्भाविवेत्युपमाया रोमाञ्चकञ्चुकेति रूपकेण चतुर्थचरणस्थानुप्रासेन च संसृष्टिश्च ॥ ३ ॥

परकीयायाः परोढात्मकं प्रथमं प्रकारमुदाहृत्य कन्यकात्मकं द्वितीयमुदाहर्तुमाह—

कन्यका यथा—

अपरिणीतराजदुहितुः सव्याजदर्शनेन क्वापि यूनि प्रेमाणमवसाय काचिदुक्तिः—

किञ्चित्कुञ्चितहारयष्टि सरलभ्रूवल्लि साचिस्मितं
प्रान्तभ्रान्तविलोचनद्युति भुजापर्यस्तकर्णोत्पलम् ॥
अङ्गुल्या स्फुरदङ्गुलीयकरुचा गण्डस्य कण्डूयनं
कुर्वाणा नृपकन्यका सुकृतिनं सव्याजमालोकते ॥ ३१ ॥

स्फुरन्ती परितः प्रसरन्ती अङ्गुलीयस्योर्मिकाया रुक् कान्तिर्यस्यां तयाऽङ्गुल्या करशाखया गण्डस्य कपोलस्य कण्डूयनं कषणं कुर्वाणा विदधाना नृपस्य राज्ञः कन्यका कुमारी *किञ्चिदीषत् कुञ्चिता प्रागल्भ्याभावेन विभ्रमेण वा तिर्य्यग्वीक्षणाद् जिह्मता वक्रता

* इत आरभ्य षट् क्रियाविशेषणानि।

हारयष्टिर्मुक्तावली लता यस्यां क्रियायां तथा सरले स्पृहाऽतिशयेन विभ्रमानभ्यासेन वा ऋजू भ्रूवल्ली नेत्रोर्ध्वरोमपद्धती यस्यां क्रियायां तथा साचि तिर्य्यग् अन्यापदेशेन प्रेम्णा स्मितमीषद्धसितं यस्यां क्रियायां तथा प्रान्तेऽपाङ्गेन त्वपाङ्गयोः वक्रीभूयैकेनैव चक्षुषा वीक्षणाद् भ्रान्ता नायकस्य दृक्पथातिक्रमणाशङ्काजनितव्याकुलतया प्रचलिता विलोचनस्य नयनस्य द्युतिर्यस्यां क्रियायां तथा भुजायां बाहौ पर्य्यस्तं तिर्य्यग्वलनात् परिक्षिप्तम् पतितं कर्णोत्पलं श्रवणावतंसकमलं यस्यां क्रियायां तथा सव्याजं लज्जाभयाभ्यां वस्त्वन्तरव्यपदेशेन सकपटं यथा स्यात्तथा सुकृतिनं दुर्लभतमराजकुमारीप्रणयविषयत्वेनाशिषं पुण्यपूरपूर्णं युवानम्, आलोकते स्वाकूतं बोधयन्ती सस्पृहं पश्यतीत्यर्थः ।

तथा च—'अङ्गुलीयकमूर्मिका' इति हारावली । 'जिह्ममूर्मिमत्कुञ्चितम्' इत्यमरः । 'हारो मुक्तावली' 'पर्य्यस्तः पतिते हते' इति विश्वः । 'यष्टिः पुंसि स्याद्भुजदण्डके । द्वयोर्हारलताभाग्योः' 'अथो भुजा द्वयोर्बाहौ' इति मेदिनी । 'अक्ष्णोर्बाह्यान्तावपाङ्गौ भ्रूरूर्ध्वे रोमपद्धतिः' इति हैमश्च ।

इहाङ्गुलीयकस्य शोभासनाथत्वेनाङ्गुल्याः सौन्दर्य्यातिशयः, गण्डस्य कण्डूयनेन मद्गण्डे त्वया झटित्येवं पत्रावली विरच्यतामिति नायकं प्रति स्वाभिलाषस्य प्रकटनेनौत्सुक्यं नायिकाया नृपसम्बन्धेन दुर्लभतमत्वं, साधारणजनानुरागासम्भवः, परितो रक्षिलक्षेण निरीक्षिताया अपि तस्याः साहसेन नायकस्य वीक्षणात्परमवशीभावश्च ताभ्यां नायकस्य सौन्दर्य्यादिगुणगौरवं, कन्यकापदेनानुपभुक्तत्वद्वारेण स्पृहणीयतमता, हारस्येषत्कुञ्चनेनात्मनो भूयस्तिर्यग्वलनं तेन स्वाभिप्रायसूचनायागोपनीयता तया स्वेङ्गितानामितरजनविदितत्वे पितुर्भयं सख्यादिभ्यो लज्जा च, यद्वा तिर्य्यग्वलनेनैवमेव जनलोचनानि वञ्चयता त्वया मदन्तिके समागन्तव्यमिति नायकं प्रति सङ्केतकरणम्, भ्रुवा लतात्वारोपेणायतत्वकार्श्यसारल्यानि ततो दूरदर्शिता सारल्येन चालोकने स्पृहाऽतिरेकः, स्त्रीत्वेन भ्रूवल्ल्या नैसर्गिकवामतात्यागासम्भवेऽपि त्यागनिमित्तमुत्कण्ठाप्रसूः प्रीतिः,

ज्योत्स्नोपमया प्रसिद्धस्य स्मितस्य साचितया गोपनेन परकीयात्वं रहस्यभेदशङ्कया ज्योत्स्नायां नायकागमननिषेधश्च, लोचनद्युतेर्भ्रमणेन नायकस्य नयनपथातिक्रमणाशङ्कया व्याकुलतामुखेन प्रणयभरः जनदर्शनभयात् सावधानेनैव भ्रमतैव त्वयाऽऽगन्तव्यमिति नायकशिक्षणं च, कर्णोत्पलस्य भुजायां पर्यसनेन तत्र तथैव कमलोपमनायककरस्पर्शसमीहा, समस्तश्लोकेन पूर्वानुरागहेतुकविप्रलम्भशृङ्गाररसश्च ध्वन्यते ।

राजकन्यकायास्तथालोकनकारणीभूतनायकसुकृतस्य पदार्थतया काव्यलिङ्गेन भ्रूवल्लीति रूपकेण च सङ्कीर्णा बालामात्रवृत्तिपरमचमत्कारितादृशविलोकनस्योपन्यासाद्

'नानाऽवस्थं पदार्थानां रूपं साक्षाद्विवृण्वती ।

स्वभावोक्तिश्च जातिश्च' इति दण्डिभट्टेन लक्षिता जात्यपरपर्य्याया स्वभावोक्तिरनुप्रासैः संसृज्यते ।

यष्टिपदस्य हारलतावाचकतायाः कोशानुशासनेऽपि हारपदस्य पृथगुपन्यासात् 'सकीचकैर्मारुतपूर्णरन्ध्रैः' इति वद्विशेष्यमात्रपरत्वेन लतामात्रबोधकत्वं 'विशिष्टवाचकपदानां सति पृथग्विशेषणवाचकपदसमवधाने विशेष्यमात्रपरत्वम्' इति सिद्धान्तात्, तेन नाधिकपदत्वदोषश्च ॥ ३१ ॥

परकीयाप्रभेदान्निरूप्योद्देशक्रमेण सामान्यां निरूपयिष्यल्लक्षयति—

वित्तमात्रोपाधिकसकलपुरुषानुरागा सामान्यवनिता ।

वित्तं धनं तदुपाधिकस्तत्प्रयोज्यः तदितराप्रयोज्यः सकलपुरुषेषु गुणवन्निर्गुणबालयुववृद्धसर्वपुंसु, अनुरागः प्रेमा प्रेमत्वेन व्यपदेश्यः न तु वस्तुतः सः यस्याः सा सामान्यवनिता वेश्येत्यर्थः । लक्षणन्तु वित्तप्रयोज्यवित्तेतराप्रयोज्यपुरुषविषयकरतिसमानाधिकरणस्त्रीत्वव्याप्योपाधिमत्त्वं प्रत्येतव्यं, वित्तमात्रप्रयोज्यानुरागस्य स्वीयापरकीययोरदर्शनान्नातिव्याप्तिः, क्वचित्तथोपलम्भेऽपि तदा न तयोरन्तर्भावमेवाङ्गीकुर्मः, प्रमाणतस्तदङ्गीकारपक्षे तु अपरिणीतत्वे सतीति

विशेषणीयं, रतौ पुरुषविषयकत्वं परिचायकमात्रं पुरुषस्यानेकत्वमविवक्षितम्, एकपुरुषानुरक्ताया अपि कचित्तस्या दर्शनाद् गुणानुरक्तानां वसन्तसेनादीनां तु तादृशरतिसमानाधिकरणोपाधिमत्तयैव परिग्रहः।

मूलोक्तलक्षणस्याव्याप्तिमाशङ्कते—

नन्वग्निमित्रे क्षितिपतावनुरक्तायामिरावत्यामव्याप्तिः, तत्र वित्तमात्रोपाधेरभावादिति चेत् ?

अग्निमित्रनामनि राजनि, गुणैर्न तु धनैरनुक्ताया इरावतीत्यभिधानाया गणिकाया अनुरागस्य वित्तेतरगुणप्रयोज्यत्वादव्याप्तिर्भवेदित्यर्थः। इह परानुमतोऽपि 'न चाग्निमित्रे' इति पाठस्तु 'मैवम्' इत्यग्रेसरेण विरोधादुपेक्षणीयः।

समाधत्ते—

मैवं, साऽपि काश्मीरहीरकादिदातरि महाराजेऽनुरक्ता, न तु महर्षौ, तेनावगम्यते तत्रापि वित्तमात्रमेवोपाधिरिति।

सा चेरावती काश्मीरमग्निशिखं केसराख्यया लोके प्रसिद्धं महार्घ्यमनुलेपनद्रव्यं हीरकं बहुमूल्यतमो वज्रमणिः आदिपदेन विलक्षणाशनपानवसनभूषणादीनां संग्रहः, महर्षिपदं सौन्दर्यतपोऽतिरेकप्रभृतिगुणगौरववत्त्वेऽपि महादारिद्र्योपलक्षकं, तेन हेतुना अवगम्यतेऽनुमीयते तत्रेरावत्यनुरागेऽप्युपाधिः प्रयोजकः। अनुमितिस्वरूपन्तु इरावतीनिष्ठोऽग्निमित्रविषयकोऽनुरागः, वित्तमात्रप्रयोज्यः, वित्तादातृविषयकत्वाभावे सति तद्दातृविषयकत्वादित्यवसेयम्।

नन्विह कल्प्यतां तथा, किन्तु दरिद्रतमे गुणवति चारुदत्तद्विजेऽनुरक्तायां वसन्तसेनायान्त्वव्याप्तिस्तदवस्थैवेत्याशङ्कां परिहरति—

महर्षौ सौन्दर्योपाध्यनुरागस्य कालिकाव्याप्यवृत्तित्वेन सार्वत्रिके तस्मिन् वित्तमेवोपाधिरिति प्रतिभाति।

महर्षिविषयकस्य सौन्दर्यप्रयोज्यानुरागस्य कालिकाव्याप्यवृत्तित्वाद् यत्किञ्चित्समयभावित्वात् काचित्कत्वाद् न वेश्यात्वप्र-

योजकता, तेन तदंशमादाय तत्राऽव्याप्तिरिष्टैव, यतः सार्वत्रिके सर्वत्र सामान्या तु भवे तस्मिन्ननुरागे धनमेव प्रयोजकम्, वस्तुतस्तु लक्षणपरिष्कारेण नास्त्यव्याप्तेः शङ्का, तेन केषांचित् सौन्दर्यानुरक्तसामान्यायाः परकीयायां प्रवेशनं तु लक्षणपरिष्करणनिबन्धनमेव तस्या अपरिणीतत्वात्। शिङ्गभूपस्तु—

'सामान्यवनिता वेश्या सा द्रव्यं परमिच्छति।
गुणहीने न च द्वेषो नानुरागो गुणिन्यपि' ॥

इति केनचित्तत्रानुरागाभावस्य व्यवस्थापितस्य तन्मतं नानुमनुते धीमान् श्रीशिङ्गभूपतिः। भावानुबन्धानुभावेन नायिकात्वपराहतेः तस्मात्साधारणस्त्रीणां गुणशालिनि नायके भावानुबन्धः स्यादेव रुद्रटस्यापि भाषणाद् इत्यनेन खण्डनमारचयन् स्वपक्षे—

'ईर्ष्या कुलस्त्रीषु न नायकस्य
स्वच्छन्दकेलिर्न पराङ्गनासु।
वेश्यासु चैतद् द्वितयं प्ररूढं,
सर्वस्वमेतास्तदहो स्मरस्ये'ति

रुद्रटसम्मतं च दर्शयन् सामान्याया रक्ता विरक्ता चेति द्वैविध्यम्

'एषा स्याद् द्विविधा रक्ता विरक्ता चेति भेदतः।
तत्र रक्ता तु वर्ण्या स्यादप्राधान्येन नाटके।
विरक्ता तु प्रसहनप्रभृतिष्वेव वर्ण्यते'
इत्यादिना प्रकाशयति।

बहूपयोगितया द्वितीयामेव सामान्यां विधामुदाहरिष्यन्नाह—

सामान्यवनिता यथा—

धनिसमुपगमे धनलिप्सयोद्भूतं वेश्याया विभ्रमं काचिद्वर्णयति—

दृष्ट्वा प्राङ्गणसन्निधौ बहुधनं दातारमभ्यागतं
वक्षोजौ तनुतः परस्परमिवाश्लेषं कुरङ्गीदृशः ॥
आनन्दाश्रुपयांसि मुञ्चति मुहुर्मालामिषात्कुन्तलो
दृष्टिः किंच धनागमं कथयितुं कर्णान्तिकं गच्छति ॥ ३२ ॥

प्रकृष्टस्य ततो दूरादेव कामुकानां दर्शनस्य तत्कृतात्मदर्शनस्य च सम्भवात् कामुकप्रचुरसंचरणसरणिसांनिध्याद्धोत्तमस्याङ्गनस्याजिरस्य सन्निधौ निकटे दूर एव न तु प्राङ्गणेऽभ्यागतम् अकस्मादेव न तु कारणतया आयातं, बहूनि धनानि यस्य तादृशमिभ्यं, किंच दातारम् अविविच्य वितरणकारकं जनं दृष्ट्वा वीक्ष्य न तु स्पृष्ट्वा सम्भाष्य वा; कुरङ्गोदृशो हरिणेक्षणायाः वक्षोजौ स्तनौ परस्परमन्योन्यं बहुमूल्यकञ्चुकीहाराद्यलङ्कारलाभसम्भावनोद्भूतानन्देनाश्लेषमालिङ्गनं तनुतो विशिष्य कुरुत इव, तथा कुन्तलः कचपाशः मालायाः सुमनोमाल्यस्य मिषाद्व्याजाद् मुहुः पुनःपुनर्भृशं वा आनन्देन शिरोमण्यादिलिप्साशबलितेन प्रमोदेन जनितानि अश्रूण्येव पयांसि सलिलानि मुञ्चति त्यजति इव, किंच दृष्टिर्दृक् धनस्य तद्दत्तवित्तस्य आगममासक्ति कथयितुमावेदयितुं कर्णान्तिके श्रोत्रसमीपं गच्छति इवेत्यर्थः।

तथा च—'अङ्गनं चत्वराजिरे' इत्यमरः। 'हरिणे एणः कुरङ्गः' इति त्रिकाण्डशेषः। 'चिकुराः कुन्तलाः कचाः' इति हैमः। 'पौनःपुन्ये भृशार्थे च सद्यो वा स्यान्मुहुःपदम्' इति वैजयन्ती च।

अत्र धनिनः प्राङ्गणसन्निधावप्यागमनदर्शनेनापि यत्रानन्दस्तत्र का कथा स्पर्शनादिनेत्यर्थापत्तिरानन्दप्रकर्षं, स च स्वमूलं लाभबाहुल्यं, कामुकस्य धनाढ्यता दानशीलता च मिथो योगक्षेमं वहन्त्यौ तादृशानन्दौचित्यौ, तस्यानाकारितस्यागमनं स्वतः प्रवृत्ततया कामातिरेकं, स तु बहुवितरणं, तच्च बहुलाभसम्भावनया परमप्रसादौचित्यं, दृशः कुरङ्गीदृक्सादृश्यमायतत्वं कामुकमनोझटितिवशीकरणसामर्थ्यं च, वक्षोजत्वमात्मीयताम्, सा चाकस्मान्नायिकासुखसाधनधनप्राप्त्यवसरे प्रहर्षौचित्यम्, आश्लेषस्य पारस्परिकता समानसम्बन्धयोः कुचयोरानन्दसाम्यम्, आङ्गुपसर्गस्तनोतिक्रिया चोपगूहनस्य भृशगाढत्वयोः कारणं प्रमोदप्राचुर्यम्; अनुपदभाविनिर्भरस्मरसमरसन्नाहं वा, उत्प्रेक्षाबोधक इवशब्द आश्लेषस्य वास्तविकमसत्त्वं तत्सदृशाकम्पजनितमिथोमिलनक्रियावत्त्वं च, वियोगिहृदयं विदारयितुं कुन्तं लातीति व्युत्पत्तिमत्कुन्तलपदं द्रुतमेव कामुकहृदयप्रवेश-

नैपुण्यं, तच्च झटिति तद्वश्यतासम्पादनेन धनलाभसम्भावनाप्रयोज्यमानन्दम्, मालापतने कामिनां कुन्तलस्यानन्दाश्रुमोत्प्रेक्षा धनलाभलोभविशेषं मदनाह्वोत्साहं कामहृदयज्वलत्कामानलप्रशमनौचित्यं च, दृष्टिपदं धनदप्रत्यासत्तिस्वयम्प्रत्यक्षीकरणक्षमत्वम्, एकवचनमन्यवैलक्षण्येन सूनृतभाषितां, ते च तदुक्तेविश्वसनीयतमतां, धनपद लब्धव्यसम्पत्तेर्नैकविधत्वम्, आगमपदं धनस्यालब्धत्वमविच्छिन्नप्रवाहलब्धव्यतां च, तुमुन्प्रत्ययः कथने स्वतः प्रवृत्त्या नितान्तहितचिन्तकत्वेन विश्वसनीयवचनतां, कर्णपदं रहस्यकथनौचित्यं, कर्णान्तविश्रान्तदृष्टिता सौन्दर्योत्कर्षं, स चावश्यं कामुकवशीकरणसामर्थ्यं, तत्तु निश्चितलाभाशया प्रमोदप्रकर्षं च सूचयति।

कुन्तल इति जातावेकवचनम्, अर्शआदित्वादज्वा तेन कुन्तलः कचपाशो बोध्यः, स्तनकुन्तलदृष्टीनां कामुकदर्शनप्रियकथनासम्बन्धेऽपि सम्बन्धाभिधानादतिशयोक्तित्रयेण कामुकदर्शनस्याग्रिमव्यापारत्रितयकारणत्वात्काव्यलिङ्गेन चानुप्राणितयोः स्वप्रणयप्रकाशनहेतुकृतकृत्रिमगात्रस्फुरणसमुन्नतस्तनसङ्घर्षस्य प्रमोदजाश्लेषात्मना सम्भावनादिवशब्दोपादानाच्च वाच्यायाः; कामुकदर्शनानन्दसम्भ्रमेण सत्वरं शिरस्यंशुकाक्षेपान् मालापतनस्य कुन्तलकृतानन्दाश्रुविसर्जनस्वरूपेणोत्प्रेक्षणादिवाद्यनभिधानादुत्प्रेक्षणं विना वाक्यार्थान्वयबोधापर्य्यवसानाच्च प्रतीयमानायाश्च क्रियोत्प्रेक्षयोः संसृष्टिश्च ॥ ३२ ॥

इति रसमञ्जरीसुरभौ स्वीयापरकीयासामान्या*पृथग्भेदनिरूपणम् ॥

---

अथ तासां पुनः साधारणं भेदत्रयं निरूपयति—

एता अन्यसम्भोगदुःखिता; वक्रोक्तिगर्विता; मानवत्यश्चेति तिस्रो भवन्ति।

एताः पूर्वोक्ता मुग्धाऽतिरिक्तनायिकाः, भर्तुरन्यस्याः परनायिकायाः सम्भोगेन दुःखिताः; वक्रोक्त्या प्रकाशितश्चासौ गर्वो वक्रोक्तिगर्वः स जात आसामिति वक्रोक्तिगर्विताः; मानः प्रियापराधबोधक-

---

* 'आजीवतस्तु गणिका, रूपाजीवा, विलासिनी' इति जीविकाभेदनिबन्धनभेदत्रयमस्या अपि समाचष्टे भोजमहाराजः।

व्यापारबोध्यो रोषः सोऽस्त्यासामिति मानवत्यश्चेति तिस्रः त्रिप्रकारा भवन्तीत्यर्थः, 'सर्वनाम्नो वृत्तिमात्रे पुंस्त्वम्' इत्यनुशासनादन्यशब्दस्य पुंस्त्वम्, गर्विता इत्यत्र तारकादित्वादितच्, मुग्धायास्तु धीराधीरादिवच्नैता विधा लज्जाभयातिरेकात्।

नन्वन्यसम्भोगदुःखिताखण्डितामानवतीनां मिथः किं वैलक्षण्यमिति चेद्? उच्यते—यदा सद्यः स्वप्रियसम्भोगसूचकलक्षणजुषः परस्या अवगमेन दुःखोद्गमः तदाऽन्यसम्भोगदुःखिताः, यदा स्वभिन्नायाः सद्यः सम्भोगं सूचयन्ति चिह्नानि बिभ्रतो नायकस्यावगत्या खेदोदयस्तदा खण्डिताः, यदा तु नायकस्य तादृशापराधावधारणया तत्प्रकाशकव्यापारप्रकाश्यः कोपोद्भवः तदा मानवत्य इति स्फुटं वैलक्षण्यम्। लक्षणन्तु स्वप्रियसम्भोगसूचकचिह्नवद्वनिताऽवगमजन्यत्वेन नायिकाविशिष्टदुःखवत्त्वमन्यसम्भोगदुःखितात्वम्, कदाचिदाप्तोक्त्यनुमितिभ्यामपि तादृशदुःखमुत्पद्यत इति ज्ञानसामान्यबोधकावगमपदनिवेशः, खण्डिताया व्यावृत्तयेऽवगमविषयत्वं वनिताया विवक्षितम्, तादृश्या दूत्या अपि दर्शनादिना दुःखोद्गमे सति लक्षणसमन्वयाय सामान्यं वनितापदं निवेश्यते, स्वतादात्म्यस्ववक्रोक्तिप्रकाश्यप्रेमसौन्दर्यान्यतरप्रयोज्यगर्वाभिधचित्तवृत्तिविशेषवत्त्वाभ्यां नायिकाविशिष्टत्वं वक्रोक्तिगर्वितात्वम्, स्वप्रियकर्तृकत्वस्वेतराङ्गनाकर्मकत्वाभ्यां नायिकाविशिष्टसम्भोगबोधकव्यापारबोध्यक्रोधवत्त्वं मानिनीत्वम्।

तत्र प्रथमं प्रकारमुदाहर्तुमुपक्रमते—

तत्रान्यसम्भोगदुःखिता यथा।

तत्र तासु, नायिकया प्रियस्यानयनाय प्रहिताऽपि तं स्वयमुपभुज्य सद्यः समागता स्फुटलक्षणलक्षितापराधा दूती भङ्ग्या भर्त्स्यते—

त्वं दूति! निरगाः कुञ्जं न तु पापीयसो गृहम्॥
किंशुकाभरणं देहे दृश्यते कथमन्यथा॥ ३२॥

हे दूति! मम नायकामिलनजातयातनाऽज्ञायिनि! केवलं सञ्चारिके! पर्य्यन्ते तु दूत्यधर्म्मप्रतिकूलसपत्नीवन्मद्यितोपभोगरूपा-

तिविप्रियकारिणि! त्वं न त्वन्या किन्तु मत्प्रेषिताऽपि त्वमेव कुञ्जम् इतः निरगा अगमः पापीयसो निर्दयतारूपातिकलुषजुषः पक्षान्तरे कृतदूतीसम्भोगासीमपापस्य तस्य गृहं गेहं तु पुनः न निरगाः; अन्यथा उक्तवैपरीत्ये; अन्येन प्रकारेण तव देहे वपुषि किंशुकानां पलाशकुसुमानाम् पर्यवसाने तदाकारकार्द्रनखक्षता-नाम् आभरणं भूषणं कथं केन प्रकारेण दृश्यतेऽवलोक्यत इत्यर्थः।

तथा च 'दूतीसञ्चारिके समे' इति हैमः। 'उपवासं गृहं गेहम्' इति चन्द्रगोमी, 'पलाशः किंशुके' इति विश्वः, 'अन्यथा पुनः; वितथे चाप-रार्थे च' इति मेदिनी च।

इह दूतीति सम्बोधनेन पूर्वमादेशकारित्वहिताचरणपरायणत्वे, पश्चात्त्वसत्यभाषणयोग्यतया नीचस्वभावतया च स्वार्थान्धत्वपरवे-दनाऽनभिज्ञत्वे, ताभ्यां पुनर्नायकोपभोगावश्यम्भावः, कुञ्जपदेन पूर्वं सन्तापनाशनसामर्थ्यम्, पश्चादुद्दीपनता, तथा तत्र नायकसान्निध्ये नितरां मदनपारवश्यसम्भवात्सुरतस्य सम्भावितत्वं, निरा एव दूत्या वियोगविकलनायिकापरिचरणवैयग्र्येण कुञ्जमिति गमनस्याबुद्धिपूर्व-कत्वम्, पश्चादनादिष्टत्वाद्गमनस्यानभिमतत्वं, तेन सकलरहस्या-वगमः, नायकस्य नामानुपादानेन कोपः, तेन स्वप्रसूः पूर्वं निर्दयता, पश्चादधमाचारता, पापीयःपदेन पूर्वं स्वयं दर्शनादानजनितसन्ता-पदानेन नृशंसता, तथा तद्गृहगमनानौचित्यम्, पश्चात्तु चित्रमीमां-सादर्शितदिशा दूतीप्रेषणात्प्राचीनानां पापानां क्षान्तावेवाह्वानसम्भ-वेन भाविपापानामक्षयत्वेन दूतीप्रेषणानन्तरजातनायकपातकान्तर-स्य ज्ञातुमशक्यत्वेन कथं चिज्ज्ञानेऽपि विदग्धनायिकायाः तदा तदा-ख्यानानौचित्येन च नखक्षतपर्य्यवसन्नस्य किंशुकाभरणस्य नायकपा-तकितायाश्चान्यथाऽनुपपत्त्याऽऽन्तरालिकी दूतीनिकृष्टसम्भोगका-रिता, एकवचनेन तिरस्क्रिया, गृहशब्देन गमनौचिती नात्र नायक-गृहगमनस्य विधिः, अन्यथाशब्देन स्वोक्तेः प्रामाणिकता, तवेत्यस्यानु-क्त्या पूर्वं तोषः पश्चाद्दूतीविषयको रोषः, देहपदेनासूक्ष्मतापुरस्थत्वे, ताभ्यां पूर्वं स्फुटशोभनत्वम् पश्चात्तिरोधातुमशक्यत्वं शोभाजनक-तया बहिरङ्गासमानत्वं च, एकवचनेन दौर्लभ्यं, कथमित्यनेनापला-

पप्रकारासम्भवः, लङन्तलक्षधातुना विद्यमानप्रत्यक्षविषयतया गोपनानर्हत्वं च व्यज्यते।

प्रागेव बाधनिश्चये नु सम्भोगात्मप्रयोजनव्यञ्जनाय नञादेर्विध्यादौ लक्षणलक्षणैवेति काव्यप्रदीपकृतः।

ये तु 'त्वं दूती कृतकुञ्जगमना, कुञ्जैकलभ्यकिंशुकाभरणवत्वा'-दित्यनुमित्यलङ्कारेण दूतीनायकसम्भोगे तदवगमजन्यनायिकादुःखादिरूपं—वस्तु व्यङ्ग्यं वदन्ति;

तैः किंशुकाभरणस्य परसमर्पणादिनाऽप्युपलब्धिसम्भवेन कुञ्जैकलभ्यत्वाभावादापन्नस्य व्याप्तिव्यतिरेकस्य समाधानमभिधानीयम्,

एतेनार्थापत्त्यलङ्कारोऽपि निराकृतः, तस्यापि व्याप्तिच्छायामुपजीव्यैव सम्भवात्।

'व्याजस्तुतिर्मुखे निन्दा, स्तुतिर्वा, रूढिरन्यथा'

इति मम्मटेन लक्षिताया व्याजस्तुतेः कथञ्चिदङ्गीकारे तु गुणीभूतव्यङ्ग्यताया दुष्परिहरत्वात्प्रकाशकृत्सम्मतं ध्वनित्वमेव तिरोदध्यादिति नैव कोऽपीह व्यपदेशसहोऽलङ्कारः ॥ ३२ ॥

अथोद्दिष्टपूर्वां वक्रोक्तिगर्वितां विभजते—

वक्रोक्तिगर्विता द्विविधा—प्रेमगर्विता; सौन्दर्य्यगर्विता च।

वक्रोक्त्या प्रकाश्यः पतिविषयकप्रेम–स्वीयसौन्दर्य्ययोर्गर्वः सञ्जातोऽस्या इति वक्रोक्तिगर्विता, लक्षणं प्रागुक्तमेव।

कस्यचित् तादृशवक्रोक्तिरचनानिपुणत्वपर्यन्तानुधावनन्तु शाब्दस्वरसासिद्धत्वादसमञ्जसम्।

आद्यां विधामुदाहर्त्तुमाह—

तत्र प्रेमगर्विता यथा।

तत्र वक्रोक्तिगर्वितयोर्मध्ये, रत्नभूषादिरचनोपादानाद्भर्तुः प्रेमबाहुल्येन स्वमाहात्म्यं वर्णयन्तीं कामपि सगर्वां काचिदतिशयितुं स्वस्मिन् प्रियस्य पुण्यप्रकर्षं विवृण्वता सोत्प्रासं वदति—

वपुषि तव तनोति रत्नभूषां
प्रभुरिति धन्यतमाऽसि किं ब्रवीमि।

सखि ! तनुनयनान्तरालभीरुः

कलयति मे न विभूषणानि कान्तः ॥ ३४ ॥

हे सखि ! तव वपुषि देहे प्रभुर्नायकः रत्नभूषां मणिमयमलङ्कारं तनोति भूयो विन्यस्यतीति हेतुना त्वं धन्यतमाऽतिशयधन्या नितरां पुण्यवत्यसि वर्तसे; तदहमिह किं ब्रवीमि त्वद्भाग्यमहिमा माद्दग्जनेन वर्णयितुमशक्य इति पूर्वम्, वृथैव कथं त्वद्भाग्यं स्तौमि त्वन्त्वधन्येति पश्चाद्भावः, मे मम पुनः कान्तो दयितः तनोः मम वपुषः; यद्वा तन्वल्पं नयनयोः स्वस्य नेत्रयोश्चान्तरालान्मध्यावकाशाद् व्यवधानात् भीरुस्त्रस्तो भूषणाच्छादितेष्वङ्गेषु दृष्टिपातव्याघाताद्भीतः विभूषणान्यलङ्कारान् अङ्गेषु न कलयति विरचयति परिधापयतीत्यर्थः ।

तथा च 'नायको नेता प्रभुः', 'अभ्यन्तरं त्वन्तरालम्' इत्यमरः, 'सुकृती पुण्यवान् धन्यः' 'भीते भीरुभीरुकभीलुकाः' इति हैमश्च ।

अत्र भूषासम्पादनेन सम्बोध्यनायिकाया अङ्गेषु नैसर्गिकरामणीयकविरहः, तेन तद्योयाधन्यत्वम्, प्रभुत्वेन तत्पतेः केवलं निग्रहानुग्रहप्रवणतया प्रेमप्रकर्षहानिः, तया तदेव किमा वचनस्यानवकाशेन पूर्वं तद्भाग्यस्यानिर्वचनीयता पश्चादश्लाघ्यता, भीरुपदेन मनागपि शोभादर्शनविच्छेदासहिष्णुतया स्वाङ्गेषु विलक्षणः शोभासमुल्लासः तेन कान्तपदेन च स्वपतेः पुण्यप्रकर्षः तावताऽऽत्मनो गर्वः समस्तेन श्लोकेन सम्बोध्यनायिकाऽपेक्षया स्वस्य कान्तप्रेमाधिक्येन व्यतिरेचनाद् व्यतिरेकालङ्कारश्च व्यज्यते ।

पतिविरचितरत्नभूषणा त्वं धन्या, अहं पुनरेतादृशी त्वधन्येत्यापातप्रतीतो वाच्योऽपि व्यतिरेकालङ्कारश्च ॥ ३४ ॥

द्वितीयां विधामुदाहर्तुमभिदधाति—

सौन्दर्यगर्विता यथा ।

स्वीयसौन्दर्य्यमनुपमं मन्यमाना काचिदालीमालपति—

कलयति कमलोपमानमक्ष्णोः

प्रथयति वाचि सुधारसस्य साम्यम् ॥

कथय सखि ! किमाचरामि कान्ते
समजनि तत्र सहिष्णुतैव दोषः ॥ ३५ ॥

हे सखि! वयस्ये ! मम अक्ष्णोः लोचनयोः कमलयोः पद्मयोः उपमानमुपमितिं कलयति विभावयति वाचा प्रकाशनपरे; किञ्च वाचि मे वाण्यां सुधारसस्य पीयूषद्रवस्य साम्यं सादृश्यम् प्रथयति प्रख्यापयति कान्ते दयिते; तमुद्दिश्य किम् आचरामि तदपराधम् प्रतिविदधामि ? इति कथयोपदिश, अथ वा किमुपदेशेनापि तत्र कान्ते तदपराधे तत्प्रतिविधाने वा सहिष्णुता क्षमाशीलतैव केवलं दोषः प्रतिबन्धकः समजनि जात इत्यर्थः। क्षमा चेन्नोदभविष्यत् तदाऽवश्यं तत्र प्रतिव्यधास्यमिति तात्पर्यम्।

तथा च 'उपमोपमानं स्याद्' इत्यमरः।

इहोपमितिरुपमानमिति भावे ल्युट, सखीति सम्बोधनमुचितोपदेशदायिताम्, कान्तपदमीदृगपराधविधानेऽप्यतिरस्करणीयताम्, नायिकानयनयोः कमलप्रतियोगिकसादृश्योपन्यासादुपमेयताकल्पनरूपापराधस्य विभावनेऽप्युद्भवन् कोपः कलयत्पदसहकारेण तदपराधस्य दुस्सहत्वम्, तन्नेत्रयोरुपमेयीभावासहनशीलताञ्च, ते पुनस्तस्या निरुपमसौन्दर्यदर्पम्, वचने सुधारससाम्यं वाक्चारिमाणम्, तज्जन्यरोषः पूर्ववदेव, किंशब्दः प्रतीकारप्रकाराणां स्वतोऽस्फुरणात्कोपं, स च प्राग्वत्सौन्दर्यातिरेकाभिमानम्, कथयेति प्रेरणाऽपराधस्योग्रतया प्रतिविधानावश्यकत्वेन झटिति वक्तव्यतां गुणस्यावश्यकताञ्च, दोषपदं गुणत्वेन प्रसिद्धायामपि सहिष्णुतायामसूयाञ्च सूचयति।

सहिष्णुताया दोषत्वकीर्तनेन नयनद्वयवचनयोः कमलसुधाद्रवप्रतियोगिकसादृश्यानुयोगित्वस्य निषेधो व्यङ्ग्य इत्युपमानस्य तिरस्कारादलङ्कारकौस्तुभसम्मतं—

'वर्ण्योपमेयलाभेन तदन्यस्याप्यनादर' इति जयदेवेन लक्षितं—प्रतीपमलङ्कारश्च ॥ ३५ ॥

विशिष्टज्ञाने विशेषणताऽवच्छेदकज्ञानस्यापेक्षणात्प्राप्तावसरतया

मान*वतीं लक्षयिष्यन् पूर्वं मानं लक्षयति—

प्रियापराधसूचिका चेष्टा मानः ।

प्रियापराधानां सपत्नीगोत्रस्खलनादीनां प्रकाशिका चेष्टा मान इत्यर्थः । वस्तुतस्तु-'मानः कोपः, स तु द्वेधा प्रणयेर्ष्यासमुद्भव' इति दर्पणानुशासनात्पूर्वोक्तप्रियापराधबोधकव्यापारबोध्यः कोप एव मानः ।

अपनोदनकारणानुगुणं मानत्रैविध्यं तावद्दर्शयति—

स च लघुर्मध्यमो गुरुश्च, अल्पापनेयो लघुः, कष्टतरापनेयो मध्यमः, कष्टतमापनेयो गुरुः ।

अल्पेन लघुनाऽन्यथासिद्धकुतूहलादिनोपायेनापनेयो निरसनीयः स मानो लघुः, कष्ट†तरेण बहुकृच्छ्रेणान्यथाकथनशपथादिना परिहार्य्यो मध्यमः, कष्ट‡तमेन क्लेशातिशयकरेण चरणपतनभूषणसमर्पणादिनाऽऽयासेनापसार्य्यो गुरुरिति माननिरासहेतूनां लघुत्वमध्यमत्वगुरुत्वानुसारान्मानस्यापि तदवगन्तव्यम् ।

न्यूनतां परिहरंश्चतुर्थीं विधामाह—

असाध्यस्तु रसाभासः ।

"प्रणामान्तो मानः" इति बाणादिभणितैश्चरणपतनान्तैरपि प्रयासैर्निरसितुमशक्योऽसाध्यो मानोऽनौचित्यप्रवर्तनात् 'तदाभासा अनौचि-

---

* स च 'प्रिये कोपः, समाख्यातो मानः सोऽपि द्विधा पुनः ।
ईर्ष्यामानस्तथा ज्ञेयो मानः प्रणयसञ्ज्ञकः'

इति रसकौस्तुभोक्त्या ईर्ष्यामानः प्रणयमानश्चेति द्विविधः, तत्र प्रणयमानमहेतुमाननाम्नोदाहरति शिङ्गभूपालः, स चोभयोर्यथा—

'पणअकुविआणं दोण्णं वि अलिअसुत्ताणं माणइण्णाणम् ।
णिच्चलणिरुद्धणीसासदिण्णअण्णाणँ को मल्लो ॥
प्रणयकुपितयोर्द्वयोरप्यलीकसुप्तयोर्मानविज्ञयोः ।
निश्चलनिरुद्धनिःश्वासदत्तकर्णयोः को मल्लः ॥

प्रकृते विघ्नतस्त्वागमापगमहेतूपादानादीर्ष्यामान एव, पुम्मानस्तु रसाभास एव रसार्णवे निर्णीतः ।

† इवर्थे द्विवचनविभज्योपपदे, इत्यादिना सुवन्तात्तरप् ।

‡ 'अतिशायने तमबिष्ठनौ' इत्यनेन बहुत्वे तमप् ।

त्यप्रवर्तिताः' इति प्रकाशसिद्धान्तेन विप्रलम्भाभासतां भजति ।

ननु तथाऽप्यास्वाद्यत्वतादवस्थ्यात्का क्षतिरिति चेद् ? न—

'अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम् ।
प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत्परा' ॥

इति ध्वनिकारानुशासनाद्रसभङ्गनास्वादभङ्गप्रसङ्गाद्, अत एव तद पनयनयोरुपाययोरुपेक्षारसान्तरयोरकमनीयकल्पयोः

'सामभेदोऽथ दानञ्च नत्युपेक्षे रसान्तरम् ।
तद्भङ्गाय पतिः कुर्य्यात् षडुपायानिति क्रमाद्' ॥

इति दर्पणे पार्य्यन्तिकतया

"यथोत्तरं बलीयांस इत्युपायाः प्रसादने ।
आद्यास्तत्र घनं कार्य्या विदग्धैः पश्चिमाः क्वचिद्" ॥

इति शृङ्गारतिलके च क्वाचित्कतयाऽभिधानम् ।

पुनर्निमित्तभेदेन मानस्य भेदं दर्शयति—

अपरस्त्रीदर्शनादिजन्मा लघुः, गोत्रस्खलनादिजन्मा मध्यमः, अपरस्त्रीसङ्गजन्मा गुरुः ।

अपरस्त्रियाः प्रकृतनायिकाऽपेक्षया अन्याङ्गनाया दर्शनादाक्षिपदाद्यलङ्करणाच्च जन्म यस्येति बहुव्रीहिः, गोत्रे नाम्नि, नामोच्चारणे स्खलनं प्रमादः, स च नायकस्य नायिकान्तरवासनाऽनुरञ्जितान्तःकरणतां व्यनक्ति तज्जन्मा मध्यमः, अपरस्त्रिया सङ्गः सम्भोगः तज्जन्मा च मानो गुरुरिति कारणस्य लघुत्वमध्यमत्वगुरुत्वनिबन्धनं कार्य्यस्यापि लघुत्वादि ज्ञेयम् ।

मानापनयनहेतूनुद्दिशन् मानं विभजते—

अन्यथासिद्धकुतूहलाद्यपनेयो लघुः, अन्यथावादशपथाद्यपनेयो मध्यमः, चरणापतनभूषणदानाद्यपनेयो गुरुः ।

अन्यथा प्रकारान्तरेण सिद्धमाकस्मिकं यत्कुतूहलं तेनापनेयो लघुः, अन्यथा वादो नैवं मयाऽऽचरितमित्यपलापवचः प्रत्ययार्थं तादृश एव शपथादिश्च ततोऽपनोद्यो मध्यमः, प्रणामादिपरिहार्यो

गुरुः, तदुक्तं मानमुपक्रम्य रुद्रभट्टेन—

'स प्रायशो भवेत् त्रेधा कामिनीनां प्रियं प्रति ।
अवेक्ष्य दोषमेतस्य गरीयान् मध्यमो लघुः' इति ॥

तत्र प्रथमं लघुं मानमुदाहर्त्तुमाह—

अपरस्त्रीदर्शनादिजन्मा यथा ।

मान इति शेषः, तदुदाहरणेन मानिनोनायिकाऽप्युदाहृतैवाव-गन्तव्या, सपत्नीदर्शनाद्यपराधप्रत्ययेण मानदार्ढ्यौचित्येऽप्यानुषङ्गिक-कुतूहलाक्रान्तमनस्त्वेन झटिति त्यक्तमानां नायिकां सखी सोपालम्भं कथयति—

स्वेदाम्बुभिः क्वचन पिच्छिलमेतदङ्गं
शातोदरि ! क्व चन कण्टकितं चकास्ति ॥
अन्यां विलोकयति भूषयति प्रियेऽपि
मानः क्व दास्यति पदं तव तन्न विद्मः ॥ ३६ ॥

हे शातोदरि ! कृशमध्ये ! तव प्रिये कान्ते न तु केवलं भर्त्तरि अन्यां परां त्वत्सपत्नीं विलोकयति सविभ्रमं पश्यति सति न तावदेव; अपि तु भूषयति तदीहितभूषाभिरलङ्कुर्वति सति; अपि च ते एत-त्प्रत्यक्षीभूतम् अङ्गं वपुः तद्दर्शनमात्रजनितसम्मदादेव; आनुष-ङ्गिककुतूहलादिकरणाद्वा क्व चन कुत्र चिद् अवयवे स्वेदा-म्बुभिर्घर्मजलैः सात्त्विकभावैः पिच्छिलं विज्जिलम् आर्द्रम् चका-स्ति शोभते तथा क्व चन क्वापि कण्टकाः सञ्जाता अस्मिन्निति कण्ट-कितं जातरोमाञ्चं चकास्ति किन्तु सपत्नीसौभाग्यसाक्षात्कारेणापि विदूय वैरूप्यं नाप्नोति तस्माद्धेतोः मान उक्तलक्षणः कोपः क्व कुत्रांशे पदं चरणं, दास्यति निधास्यति तद् वयं न विद्मोऽवगच्छाम इत्यर्थः ।

तथा च 'शितं; शातञ्च निशिते कृशे' इति विश्वः, 'पिच्छिलं विज्जिलं समे' इति हैमः; रोमाञ्चद्रुमाङ्गयोः कण्टकः' इति मेदिनी च,

तव समक्षमेव कान्ते विप्रियमाचरत्यपि यदि ते न क्षोभः; प्रत्युत हर्ष एव तदा ते मानः कथं भवेत्, किं वा मदुपदेशश्च कुर्या-दिति भावः ।

अत्र श्यतेः क्ते 'शाच्छोः' इत्यादिनेत्त्वविकल्पे शातमिति, मत्वर्थे पिच्छादित्वादिलचि पिच्छिलमिति, 'अस्मदो द्वयोश्च' इत्यनेनैकत्वविवक्षायामपि बहुवचनमिति तदनुरोधाद्विद्रुम इति च सिध्यति।

अङ्गभूमाविति भाषयतीति चापपाठः, पिच्छिलकण्टकितयोर्विशेष्याभावेनानन्वयप्रसङ्गात्, णिचं विना भाषयतीति प्रयोगासम्भवाण्णिजर्थस्याविवक्षायां प्रमाणाभावाद् विवक्षायामनन्वयापत्तेश्च,-पिच्छिलपदस्य स्नेहार्द्रे शक्तत्वेऽपि रूढ्याऽऽर्द्रमात्रे लक्षणा।

शातोदरीतिसम्बोधनेनोदरस्य कार्श्येनोदरेऽपि मानस्य पदार्पणानवकाशेनाचिरस्थायिता, प्रियत्वेन तद्वर्धितसपत्नीसौभाग्यस्य दुःसहत्वेन तद्वर्धितसपत्नीसौभाग्यस्य चिरस्थितियोग्यतायामपि तदभावः, तेन नायिकायाः केवलकौतुकेन वशीभावः, तेनास्या असमीक्ष्यकारिता, तया सख्यास्तस्यामसूया, नायिकासपत्न्या नामाग्रहणेन द्वेषोत्कर्षः; असह्यता च, अपिना नायिकान्तरविलोकनविभूषणयोस्तोत्रापरावता, एतदाऽङ्गस्य पिच्छिलकण्टकितत्वयोरनिह्नवनीयत्वम्, बहुवचनेन बहूनां स्वेदाम्बूनामगोप्यतया प्रेमप्रकर्षः, वचनद्वयेनाङ्गस्य नितरां कण्टकाद्याकीर्णतया मानावस्थितेः सर्वथाऽनवकाशः, आर्द्रताकण्टकितत्वाभ्यामन्तःकरणस्य कान्तप्रेमार्द्रीभावेन परोपदेशात्कदा चित्कथमप्युत्पन्नस्यापि मानस्यावस्थानासम्भवः, उत्पन्नविनष्टमानस्य सपत्नीविलोकनादिजन्यतया कान्तदर्शनमात्रापनीततया लघुत्वं च द्योत्यते।

अन्योऽपि जनः पिच्छिले सकण्टके च प्रदेशे पतनाच्छेदाच्च बिभ्यत्पदं न विदधातीत्यप्रस्तुतार्थावगमाद्;

'यत्र प्रकारवाचकपदमात्रं व्यङ्ग्यवाच्यसामान्यम्। तच्छ्लेषेऽप्रकृतार्थोक्तिः सोक्ता समासोक्तिः' इति कौस्तुभलक्षितया समासोक्त्योपस्कृता मानावस्थानहेतुसत्त्वेऽप्यसत्त्वात् पिच्छिलकण्टकिताङ्गत्वात्मनस्तन्निमित्तस्योपादानाच्च,

'विशेषोक्तिरखण्डेषु कारणेषु फलावचः' इति प्रकाशलक्षितोक्तनिमित्ता विशेषोक्तिरलङ्कारश्च ॥ ३६ ॥

मध्यमं मानमुदाहर्तुमाह—

गोत्रादिस्खलनजन्मा यथा।

शपथेन मानमपाचिकीर्षुर्नायकः प्रियामनुनयति—

यद्गोत्रस्खलनं तत्र भ्रमं यदि न मन्यसे ॥
रोमालिव्यालसंस्पर्शं शपथं तन्वि ! कारय ॥ ३७ ॥

हे तन्वि कोमलाङ्गि ! यद् मे मम गोत्रे नाम्नि तदुच्चारणे त्वत्सपत्नीनामग्रहणे स्खलनं प्रमादोऽभूद् यदि तत्र तस्मिन् विषये कारणम् भ्रमं मिथ्याज्ञानं न मन्यसे नैव प्रत्येषि तदा रोमालिः तव रोमपङ्क्तिरेव दैर्घ्यकार्ष्ण्ययुवजनमनोदंशनैश्च व्यालः सर्पः तस्य संस्पर्शं सम्यगामर्शनं तद्रूपं शपथं दिव्यं कारय त्वं—मया विधापयेत्यर्थः। तवैव भ्रमेण त्वत्सपत्नीनाम मया गृहीतं न तु तत्र प्रेमप्रकर्षेणेति भावः।

तथा च 'गोत्रं नाम्नि कुलेऽप्यद्रौ' इति यादवः, 'पङ्क्तिरालिरुदाहृता' इति क्षपणकः, 'मिथ्यामतिर्भ्रमः' 'शपनं शपथः' इत्यमरश्च। इह भ्रम इति स्वन्तपाठे तु भ्रमः कारणमिति यदि न मन्यस इत्यर्थ आक्षेपबाहुल्यं दोषः, एवं रोमालिव्यालीतिपाठे च ङ्योपोह्रस्वता दुर्लभा 'ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्' इत्यस्य तु समस्थ मानपदयोः संज्ञात्व एव प्रवृत्तेः, विवादे साक्षिपत्रयोरलाभे;

'तुलाऽग्न्यापो विषं कोशो दिव्यानीह विशुद्धये' इति याज्ञवल्क्यानुशिष्टं व्यालामर्शनं दिव्यमवसेयम्। यदिभ्रमानङ्गीकारानौचितीम्, रोमालौ व्यालत्वारोपः कार्ष्ण्यदैर्घ्यै विषवत्तया दुःस्पर्शत्वं स्वाभाविकक्रूरत्वं च, तानि च तत्स्पर्शेन शपथे विश्वसनीयताम्, समुपसर्गः स्पर्शस्य गाढतया मणिमन्त्रौषधप्रपञ्चासम्भवेनातिविषमतया शपथस्यैव प्रत्येयताम्, शपथपदं विवादस्य परिहारकान्तरापेक्षया गरिष्ठताम्, तथाऽऽचरणाङ्गीकारेणात्मनो नितरामदोषत्वं च, कारयेति णिजन्तपदं स्वस्य तदेकाधीनताम् अतएव निरपराधत्वम्, गोत्रस्खलनजन्मनोऽस्या मानस्य शपथापनेयतां मध्यमतां च सूचयति—

'अनुकूलं प्रातिकूल्यमनुकूलानुबन्धि चेद्' इति दर्पणकृदङ्गीकृतमनुकूलमलङ्कारश्च ॥ ३७ ॥

गुरुमानमुदाहर्तुमुपक्रमते—

अपरस्त्रीसङ्गजन्मा यथा।

गुरुमानजुषो नायिकायाः स्वरूपं कश्चिद्वदति—

दयितस्य निरीक्ष्य भालदेशं
चरणालक्तकपिञ्जरं सपत्न्याः ॥
सुदृशो नयनस्य कोणभासा
श्रुतिमुक्ताः शिखरोपमा बभूवुः ॥ ३८ ॥

दयितस्य प्रेयसः भालदेशमलिकपट्टं सपत्न्याः चरणयोरलक्तकेन यावकेन पिञ्जरं पीतं निरीक्ष्य निश्शेषेण दृष्ट्वा सुदृशो रुचिरलोचनायाः नयनस्य कोणभासाऽश्रिकान्त्या प्रियं प्रति प्रहितया सकोपकटाक्षच्छटया श्रुतौ नायिकायाः तच्चरणपतितस्य नायकस्य वा कर्णे स्थिताः मुक्ता मौक्तिकानि शिखरेणोपमीयन्त इति शिखरोपमा रक्तमणितुल्या बभूवुरजायन्तेत्यर्थः, भाले चरणालक्तकमुद्रया सद्यः सपत्नीसङ्गमनुमायाकुप्यदिति भावः ।

तथा च 'भाले गोध्यलिकालीकललाटानि' इति हैमः, 'यावोऽलक्तो द्रुमामयः' इत्यमरः, 'पीते च पिञ्जरः' इति विश्वः, 'कोणोऽश्रा' विति त्रिकाण्डशेषः, 'शिखरः पद्मरागः स्याद्' इति वैजयन्ती च ।

अत्र 'कोणभासः' इति पाठे तु भासामेव कर्तृत्वम्, श्रुतिमुक्तत्वं च तद्विशेषणमेव बोधनीयं, किन्तु तदानीं कटाक्षकान्तीनां श्रवणप्ररितत्वाप्रसिद्ध्या परिहारोपायश्चिन्तनीयः ।

'नवकुङ्कुमपुञ्जपिञ्जरे रतिरास्तां मम गोपकुञ्जरे'

इत्यादिप्रामाणिकप्रयोगोपलब्धे रक्तेऽपि पिञ्जरपदोपन्यासो न दोषाय नीलहरितवद्रक्तपीतयोस्तादात्म्याङ्गीकारात् । नागेशाभिमतः पिङ्गल इति पाठस्तु न चोद्यक्षमः, तद्दोषतादवस्थ्यात् ।

दयितत्वेन तस्मादीदृशापकारस्यासम्भावितपूर्वत्वेन तदाचरणाद्वैक्लव्यातिरेकदायिता, सपत्नीपदेन नैसर्गिकद्वेषः, भालस्य पिञ्जरीभावेन विपरीतरतं मानापनोदनाय नायिकचरणपतनं वा, ताभ्यां नेतुः सपत्न्यां प्रेमोत्कर्षः, तेनास्यास्तत्रालमता, एकवचनेनैकमात्रनेत्रस्य निरीक्षणव्यापारः, तत्रापि कोणपदेन तिर्यग्विलोकनं, ताभ्यां नायकविषयको मानः, नायकश्रुतिगतमुक्तानां रक्तीभावपक्षे मानापाकरणाय प्रणामः, तेन

प्रणामापनेयत्वेन मानस्य गुरुत्वं वस्तु, ईर्ष्याहेतुकविप्रलम्भश्च ध्वन्यते। शिखरोपमा इत्युपमया संस्कृतः;

'तद्गुणः स्वगुणत्यागादत्युत्कृष्टगुणप्रदः' इति दर्पणलक्षितस्तद्गुणोऽलङ्कारः।

'विषमे ससजा यदा गुरू चेत्, सभरा येन तु मालभारिणीयम्' इति केदारोक्तलक्षणं मालभारिणीच्छन्दश्च ॥ ३८ ॥

अथ नायिकानामवस्थाभेदेन प्रकारान्तरमपि निरूपयिष्यन्नुद्दिशति—

एताः षोडशाप्यष्टाभिरवस्थाभिः प्रत्येकमष्टविधाः, प्रोषितभर्तृका, खण्डिता, कलहान्तरिता, विप्रलब्धा, उत्का, वासकसज्जा, स्वाधीनपतिका, अभिसारिका, चेति गणनाद् एतासामष्टाविंशत्यधिकशतं भेदा भवन्ति।

एता अनन्तरोक्ताः, स्वीया त्रयोदशविधा, परकीया द्विविधा, सामान्या चैकविधेति सङ्कलनया षोडशप्रकारा नायिका वक्ष्यमाणलक्षणाः प्रोषितभर्तृकत्वादिभिरष्टभिरवस्थाभिर्दशाभिर्हेतुभिः प्रत्येकमष्टधा विभक्तास्तेनैतासां षोडशानामष्टाभिर्गुणनेन १२८ अष्टाविंशत्यधिकशतं प्रकारा भवन्तीत्यर्थः। तदुक्तं रसार्णवसुधाकरे—

'प्रथमं प्रोषितपतिका वासकसज्जा ततश्च विरहोत्का।
अथ खण्डिता मता स्यात्कलहान्तरिताऽभिसारिका चैव ॥
कथिता च विप्रलब्धा स्वाधीनपतिस्तथा चान्या।
शृङ्गारकृतावस्थाभेदात्ताश्चाष्टधा भिन्नाः' ॥ इति,

पुनस्तदीयभेदान्तराणि दर्शयति—

तासामप्युत्तममध्यमाधमभेदगणनया चतुरधिकाशीतियुतं शतत्रयं भेदा भवन्ति।

तासामष्टाविंशत्यधिकशत १२८ प्रकारकनायिकानां, गुणतारतम्यमूलकोत्तममध्यमाधमत्वैस्त्रिभिर्धर्मैर्युक्ताभिर्गुणनाच्चतुरशीत्यधिकशतत्रयं ३८४ भेदा भवन्ति।

'गुणतो नायिकाऽपि स्यादुत्तमा मध्यमाऽधमा'

इति भोजराजानुशासनात् ।

के*चित्तु परकीयाया उत्काऽभिसारिकाविप्रलब्धेति भेदत्रयमेवाङ्गीकुर्वन्तोऽष्टादशाधिकशतं ११८ नायिकास्तिसृभिर्गुणयित्वा चतुःपञ्चाशदुत्तरशतत्रयं ३५४ ता मन्यन्ते ।

'त्र्यवस्थैव परस्त्री स्यात्प्रथमं विरहोन्मनाः ।
ततोऽभिसारिका भूत्वाऽभिसरन्ती व्रजेत्स्वयम् ॥
सङ्केताच्च परिभ्रष्टा विप्रलब्धा भवेत्पुनः ।
पराधीनपतित्वेन नान्याऽवस्थाऽत्र सङ्गता' ॥ इति ।

---

* धनिकप्रभृतयः । तदुक्तं रसार्णवेऽपि—

स्वाऽन्या साधारणस्त्रीति मुग्धा मध्या प्रगल्भिका ।
आद्यैकधा त्रिधाऽन्ये द्वे धीराधीरोभयात्मना ॥
ज्येष्ठाकनिष्ठाभेदेन ते एव द्विविधे पुनः ।
अन्या कन्या परोढा च वेश्या त्वेकेति षोडश ॥
स्वाधीनपतिकाद्यष्टावस्थाभिस्ताः समन्विताः ।
प्रत्येकमष्टधा मुख्या मध्या हीनेति तास्त्रिधा ॥
इत्येवं नायिकाऽवस्थाः समुद्राष्टाग्नि ३८४ सम्मिताः ।
विरहोत्कण्ठिता चैव विप्रलब्धाऽभिसारिका ॥
इत्यवस्थात्रयं प्राहुः केचित्कन्यापरोढयोः ।
चतुःपञ्चाशदधिकत्रिंशत्यासां तदा भवेदिति ॥

† वस्तुतस्तु परकीयाया अपि भेदाष्टकमिष्टमेव, वैषम्ये बीजाभावात् ।

यत्तु दर्पणविवृतौ 'परस्त्रियाः पार्श्वे नायकस्य सततमवस्थानायोगान्न स्वाधीनभर्तृकात्वम्, नायिकान्तरसम्भोगेनेर्ष्याया असम्भवाच्च खण्डितात्वम्, नायिकान्तरसम्भोगदोषात्कान्तत्यागासम्भवेन न कलहान्तरितात्वम्, कान्तस्य दूरदेशगमनेन मनोभवदुःखार्तत्वाभावाच्च प्रोषितभर्तृकात्वम्, परालोकनशङ्कया सज्जितवासवेश्मनि मण्डनासम्भवाच्च वासकसज्जात्वम्, इति तत्साधनमभ्यधायि,

तदविवेकविजृम्भितमेव, तत्तदुदाहरणसमीक्षणेन परकीयाया अपि तदवस्थानां सुधीभिरवधारणात् ।

अथैतदनुसारेण गणनायां तु पूर्वं ३८४ भेदाः, तेषां त्रिभिर्गुणनायाम् ११५२, तेषां चतुर्भिः ४६०८ भेदाः, तेषामपि चतुर्भिः १८४३२, पुनश्चतुर्भिः ७३७२८, पुनस्त्रिभिः २२११८४, पुनरपि चतुर्भिरेव गुणनायाम् ८८४७३६, षट्त्रिंशदुत्तरसप्तशताधिकचतु-

एतावन्नायिकाभेदपरिगणनन्तूपलक्षणमेव, भेदान्तराणामप्याम्नानात्, तथा चोक्तम्—

'पुनश्च तास्त्रिधा ज्ञेया दिव्यादिव्योभयात्मना।
चतुर्धा चोद्धतोदात्ता * ललिता शान्तिका तथा।

---

रशीतिसहस्रयुतलक्षाष्टकं नायिकाशुद्धभेदा भवन्ति। सङ्कीर्णगणनाऽप्यनयैव दिशाऽवसेया।

नव्यास्तु स्वीयासामान्ययोः, उद्धतोदात्तयोः, नायिकाप्रतिनायिकयोरेवंविधानामपरासाञ्च नायिकानामनौचित्यात्साङ्कर्य्यं न सम्भवति; अत एव—

'क्वचिदन्योन्यसाङ्कर्यमासां लक्ष्येषु दृश्यते'—

इति दर्पणे क्वचित्पदमुपात्तम्, तथा स्वीयाया औद्धत्यं, सामान्यायाः शान्तता, उदात्ताया अधमता च नोपपद्यते; तस्माच्च तदादानेन तावन्तः शुद्धभेदा अपि सम्भविन इति स्वयमनौचित्यं परिहरद्भिः सहृदयैर्नायिकाभेदा गणनीया इति समाचक्षते।

* 'गर्वशालिन्युद्धता स्यादुदात्ता गूढमानिनी।
ललिता साध्यमानेहा शान्ता निर्मानमानसा॥
भुक्ताऽन्येन पुरा पश्चादूढाऽन्येनाक्षता मता।
भुक्ता शक्तिसुतेनोढा राज्ञा सत्यवती यथा॥
गते भर्तरि यान्यं श्रिता सा तु क्षता मता।
यथा तारा रविसुतं श्रिता वालिनि मारिते॥
यातायाता तु युगपदूढाऽनेकैस्तु भर्तृभिः।
यथा पाण्डुसुतैरूढा द्रुपदस्य कुमारिका॥
ऊढैकेन तु सन्त्यक्ता क्रमाद् यायावरा मता।
यथा बहुवरैरूढा माधवी चोपलात्मजा॥
पद्मिनी चन्द्रवदना शिरीषमृदुला तथा।
चित्रिणी लोलनयना शिल्पसङ्गीतलोलुपा॥
शङ्खिनी स्याद् बृहन्मध्या कोपिन्यल्पस्तनी तथा।
दीर्घपादा द्रुतगतिः कुटिलाक्षी च पिङ्गला॥
हस्तिनी बहुभुक्क्रूरा निस्त्रपा पिङ्गकुन्तला।
कफिनी स्थिररागा स्याच्छ्यामा सुस्निग्धलोचना॥
वातुला तु कठोराङ्गी कफला कृष्णपाणिजा।
पित्तला शोणनयना गौराङ्गी कुशला रते॥
नायिकामुख्यफलभाग् वेण्यां द्रुपदजा यथा।
हेतुरीर्ष्याहृतादीनां विपक्षा प्रतिनायिका॥

अज्ञता च ज्ञता याताऽयाता याथावरेत्यपि ।
पुनश्चतुर्धा कथिता पूर्वैर्भोजादिभिर्बुधैः ।
पद्मिनी चित्रिणी चैव शङ्खिनी हस्तिनीति च ।
पुनश्चतुर्धा कथिता कामशास्त्रेषु जातितः ।
कफिनी वातुला पित्तला प्रकृत्या पुनस्त्रिधा ।
सा चतुर्धा पुनरपि नायिका प्रतिनायिका ।
उपनायिकया सार्धं तथाऽऽख्याताऽनुनायिका' ॥ इति ।

एवंच पूर्वोक्त ३५४ वेदप्राणाग्निमितभेदानां दिव्यादिभेदत्रयेण गुणनाद् १०६२ द्वाषष्ट्यधिकसहस्रं भेदाः; तेषां पुनरज्ञतादिभेदचतुष्टयेन गुणनाद् ४२४८ अष्टचत्वारिंशदुत्तरद्विचत्वारिंशच्छतं भेदाः; तेषां पुनरज्ञतादिभेदचतुष्केण गुणनाद् १६९९२ नेत्ररत्नरन्ध्ररसरसामिता भेदाः; तेषामपि पद्मिन्यादिभेदचतुष्टयेन गुणनाद् ६७९६८ गजतुंग्रहमुनिरसमिता भेदाः तेषान्तु कफिन्यादिभेदत्रयेण गुणनाद् २०३९०४ युगाम्बररन्ध्रदामव्योमपक्षमिता भेदाः; तेषाञ्च नायिकादिभेदचतुष्टयेन गुणनात् ८१५६१६ षोडशोत्तरषट्शतीसहितपञ्चदशासहस्रोत्तरलक्षाष्टकं भेदाः संभवन्तीति दिक् ।

अथ नायिकाया दिव्यादिभेदान् खण्डयितुमुपक्रमते—

यत्तु—एतासां दिव्यादिव्योभयभेदेन गणनया द्विपञ्चाशदधिकशतयुतं सहस्रं भेदा भवन्ति,

दिव्या इन्द्राण्यादयः, अदिव्या मालत्यादयः, दिव्यादिव्याः सीतादय इति ।

'एतासाम् ३८४ प्रकारकनायिकानाम् दिव्यादिभेदत्रयेण गुणनात् ११५२ भेदा भवन्ति' इति यदुक्तमिति शेषः । तत्र दिव्यत्वमनिमेषत्वस्थिरयौवनत्वादिसुरासुरसाधारणधर्मो विवक्षणीयः । अदिव्यत्वं तु

---

दुर्योधनस्य दयिता तत्र भानुमती यथा ।
तस्याः कैश्चिद् गुणैर्हीना पूज्या चैवोपनायिका ॥
समा न्यूनाऽपि वा किञ्चित्कनीयस्यनुनायिका' ॥ इति ।
तासां विशेषनिरूपणं मन्दारमन्दे स्फुटम् ।

तद्भिन्नो मानवत्वसमानाधिकरणो निमेषादिधर्मः। तदुभयसमावेशाच्च सीतादौ दिव्यादिव्यत्वम्।

उपक्रान्तं खण्डयति—

तन्न, अवस्थाभेदेनैव नायिकानां भेदात्।

अवस्थाभेदेन प्रोषितभर्तृकत्वादिदशाविशेषेणैव न तु जात्यादिभिर्भेदाः।

तन्नियमानङ्गीकृतावापत्तिमाह—

जातिभेदेन भेदस्वीकारे नायकानामप्येवमानन्त्यं स्यात्।

तुल्यन्यायान्नायिकावन्नायकानामपि जात्यादिभिर्भेदादानन्त्यमापद्येत।

ननु नायकानां ते भेदा यदा प्रसिध्यन्त्येव न हि, किं तदा तदापादनमित्याशङ्कायामाह—

तथा भेदा नायकानामपि सन्ति। दिव्या इन्द्रादयः, अदिव्या माधवादयः; दिव्यादिव्या रामादय इति।

स्पष्टम्।

अयमत्राभिसन्धिः—आनन्त्यापत्तिशङ्कया यथा सम्भवन्तोऽपि कियन्तो दिव्यत्वादिभिर्भेदा नायकानां नैव गण्यन्ते, तथैव नायिकानामपि नैव गणनीयाः। अन्यथाऽऽनन्त्यापत्तिस्तुल्यैव; किन्तु भोजराजानुमतैर्वयःकौशलप्रेमर्धिदशागुणैरेव तासां भेदस्वीकारे पारिमित्यमिति प्राञ्चः।

अर्वाञ्चस्तु—

'दिव्याः शच्यादयः प्रोक्ता अदिव्या मालतीमुखाः।
दिव्यादिव्या इति प्रोक्ता जानकीरुक्मिणीमुखाः'॥

इत्याद्युपलब्धौ वात्स्यायनसम्मतौ च सत्यां किमिति नायिकानां ते भेदा न स्वीक्रियेरन्? नायकतुल्यन्यायेनेति चेत्? तदानीं नायिकावन्नायकानामपि खण्डितादिभेदाः स्युः। अभ्युपगमे त्वनौचित्यादरस्यतापातः। *न हि कोऽपि सहृदयः सद्यःपरोपभोगसूचकचिह्नवन्नायि-

* इदमधस्तान्नायकनिरूपणे स्फुटम्।

कादर्शनकृद्धनायकवर्णनमुचितं मन्यमानः कथञ्चिदपि तन्निबन्धाद् रसमास्वादयति। आनन्त्यं त्वियत्ताप्रदर्शनेन परिहृतमेव, घटत्वाश्रयव्यक्त्यानन्त्यवद्वा मर्षणीयमिति वदन्ति।

परे तु—परैरापाद्यमानं नायकदिव्यादिभेदबाहुल्यमपीष्टं मन्यन्ते।

ननु प्रज्ञाविशेषरूपकारणाभावान्मुग्धाया यथा धीरादिभेदाभावः, तथैव प्रोषितभर्तृकादिभेदाभावोऽपि न कथमित्यत्राह—

यद्यपि मुग्धाया यथा धीरादिभेदाभावः तथाविधप्रज्ञासामग्र्यभावात्, तथाऽत्राप्यष्टविधत्वाभावो भवितुमर्हति।

इत्याशङ्क्य समाधत्ते—

तथाऽपि प्राचीनलेखानुरोधेन नवोढामालम्ब्यैते भेदा अवगन्तव्याः।

प्राचीनानुरोधपदेन तत्पक्षस्यानुपपन्नता सूच्यते। केवलं नवोढाया ग्रहणेऽपि मुग्धाऽविशेषात्तद्दोषतादवस्थ्यमिति विश्रब्धनवोढाया ग्रहणे तात्पर्य्यम्।

अथोक्तभेदाष्टके प्रथमं लक्षयति—

देशान्तरगते प्रेयसि सन्तापव्याकुला प्रोषितभर्तृका।

प्रवसतेर्देशान्तरगतौ प्रसिद्धेः प्रोषितो देशान्तरं गतः प्रेयान् कान्तः (न तु पाणिगृहीतैव, तथा सत्युदाहरिष्यमाणयोः परकीयासामान्ययोरसङ्ग्रहः * स्यात्) यस्याः सा प्रोषितभर्तृका विरहिण्यात्यर्थः। कान्तकर्तृकभूतदेशान्तरगमनप्रयोज्यसन्तापवत्त्वं तत्त्वमिति तल्लक्षणम्॥

परीक्षते—

उत्का-कलहान्तरिता-विप्रलब्धानां पतिर्देशान्तरगतो न भवतीति न तत्रातिव्याप्तिः।

उत्कादीनां वक्ष्यमाणलक्षणानां कान्तस्य देशान्तरगमनाभावात्तासु

---

* अत एव—

'देशान्तरगते कान्ते खिन्ना प्रोषितभर्तृका'।

इत्यत्र विद्यानाथः कान्तपदमेव प्रायुङ्क्त।

नैतल्लक्षणसमन्वयः ॥

अथ परिचयार्थं तस्या व्यापारानाचष्टे—

अस्याश्चेष्टा दशावस्थाः, तास्त्वग्रे वक्ष्यन्ते ।

अभिलाषादयो दश दशाः अग्रे विप्रलम्भनिरूपणावसरे वक्ष्यन्ते व्याहरिष्यन्त इत्यर्थः ।

प्राथम्यान्मुग्धां प्रोषितभर्तृकामुदाहर्तुमाह—

मुग्धा प्रोषितभर्तृका यथा—

सन्निकर्षविप्रकर्षवशात्कथञ्चित्किञ्चिन्मुग्धप्रोषितभर्तृका दशामवस्यन्ती सा कामप्यालपति—

दुःखं दीर्घतरं वहन्त्यपि सखीवर्गाय नो भाषते
शैवालैः शयनं सृजन्त्यपि पुनः शेते न वा लज्जया ॥
कण्ठे गद्गदवाचमञ्चति दृशा धत्ते न बाष्पोदकं
सन्तापं सहते यदम्बुजमुखी तद्वेद चेतोभवः ॥ ३९ ॥

अम्बुजमुखी कमलानना दीर्घतरमत्यायतं वियोगजन्यतया दुःसहं दुःखं क्लेशं वहन्ती धारयन्ती अनुभवन्ती अपि सखीवर्गाय सहचरीनिचयाय लज्जया नो नैव भाषते कथयति । वा पुनः शैवालैर्जलनीलीभिः सन्तापनाशाय शयनं तल्पं सृजन्ती रचयन्ती अपि लज्जयाऽपत्रपया न शेते स्वपिति । तथा कण्ठे गले गद्गदवाचं मन्मनम् खेदजाव्यक्तगिरम् अञ्चति वहति किन्तु लज्जयैव दृशा दृष्टया बाष्पोदकं नयनसलिलं न धत्ते धारयति । इत्थं सा यद् यादृशम् सन्तापं विरहदहनस्य दाहं सहते मृष्यति अनुभवति तत्तम् चेतोभवो मदनः वेद जानाति नापरः कश्चित् इत्यर्थः ।

तथा च 'दीर्घमायतम्' इत्यमरः । 'मदसम्मदपीडाद्यैर्वैस्वर्यं गद्गदं विदुः' इति दर्पणः । 'मन्मनो गद्गदध्वनौ' इति त्रिकाण्डशेषश्च ।

इह यदित्यस्य येन प्रकारेणेति कस्यचिद् व्याख्यानन्तु न सङ्गतम् तस्याव्ययत्वे 'हेतौ यत्तद्यतस्ततः' इति हैमकोशेन हेतावेव शक्तेरवधारणात् अनव्ययत्वे तु द्वितीयान्तत्वेन तादृशरूपस्यैवाभावात् इति

सर्वथा प्रकारार्थकता दुर्लभैव। किन्तूद्देश्यप्रक्रान्तवाचकयोर्यत्तदोः सन्तापविशेषणोपस्थापकत्वे यं तमिति पाठः साधीयान् प्रतिभाति। यथाश्रुते तु सामान्ये नपुंसकमेव शरणम्। भाषणेऽनयोरभावे लज्जैव कारणम्।

मुखेऽम्बुजौपम्यमम्लानत्वम्। तच्च सतोऽपि दुःखस्य गोपनद्वारेण नायिकाया मौग्ध्यम्, दीर्घपदं दुःखस्य नैरन्तर्यम्, तरप्प्रत्ययोऽसन्तरणीयतां पुरस्कृत्य दुःसहत्वम्, वहन्तीपदं दुःखस्यानिच्छायामपि पारवश्येनानुभवनम् कठोरहृदयतां प्रतीकारासामर्थ्यं च, शतृप्रत्ययोऽपि दुःखस्य विद्यमानतामुखेन दुःसहत्वमेव, सखीपदं रहस्यनिवेदनस्यौचित्यम्, वर्गपदं सख्याः कथञ्चिदेकस्य अक्षमत्वेऽपि सखीसमुदायस्य त्ववश्यं दुःखप्रतीकारसामर्थ्यम्, रहस्यवेदिनि सखीवर्गेऽपि सन्तापानिवेदनं लज्जाऽतिरेकेण मुग्धात्वम्, शय्याया विपुलशैवालमयता झटितितापतिरोधानसामर्थ्यम्, रचयन्तीपदं शय्यारचनाया आदरपूर्वकत्वम्, वाचो गद्गदत्वं बाष्पोद्रेकम्, गद्गदध्वनेः कण्ठे वहनेन रसनाजाड्यम्, धारणं वाचोऽस्फुटताम्, सा च त्रपाखेदयोः सम्भेदम्, दृशेत्येकवचनं विविधविलोकनाभावम्, स च चिन्ताम्, चेतोभवपदं कामस्य हृदयोद्भवत्वेन सकलसन्तापदानौचितीम् अन्येषां तदभावेनासमर्थताञ्च द्योतयति।

दीर्घतरदुःखानुभवादिहेतुसत्त्वेऽपि तन्निवेदनादिकार्याभावात् लज्जारूपतत्कारणोक्तेश्चोक्तनिमित्ता विशेषोक्तिरलङ्कारश्च ॥ ३९ ॥

मध्यां प्रोषितभर्तृकामुदाहर्तुमुपन्यस्यति—

मध्या प्रोषितभर्तृका यथा—

चिरान्न्यस्तधारणे अपि वासोभूषणे भारभूते मन्यमानां सहचरीं पृच्छति—

वासस्तदेव वपुषो वलयं तदेव
हस्तस्य सैव जघनस्य च रत्नकाञ्ची॥
वाचालभृङ्गसुभगे सुरभौ समस्त-
भाराधिकं भवति ते सखि! किं निदानम् ॥ ४० ॥

हे सखि! यदा ते तव वपुषः कायस्य वासो वसनं तत् परिहितपूर्वम् एव, न तु नवीनं किमपि गुरुतरम् अस्ति। तथा हस्तस्य वलयं तद् धृतपूर्वम् एव, न त्वन्यत् पृथु अस्ति। किञ्च जघनस्य कटिपुरोभागस्य रत्नकाञ्ची मणिमेखला सा पूर्वपरिचिता एव, न त्वपूर्वा अस्ति। तदा वाचाला बहुगर्हितभाषिणः अधिककटुध्वनिकारिणः च ते भृङ्गा द्विरेफाः तैः हेतुभिः सुभगे सुन्दरे सुरभौ वसन्ते अद्यास्मिन्नहनि इदानीं तद् वासःप्रभृति समस्तं सर्वम् अधिकमपेक्षितातिरिक्तम् असह्यं भवति। तत्र किं निदानमादिकारणं तत्कथय इत्यर्थः।

धृतपूर्वाणां वासोभूषाणां धारणेन नैतावच्चेतोवैक्लव्यं सम्भवति किन्तु वियोगजमेव लज्जया त्वया परं गोप्यत इति भावः।

तथा च 'वाचालो बहुगर्ह्यवाक्' 'अतिरिक्तः समधिकः' निदानं त्वादिकारणम्' इत्यमरः। 'सुरभिः शल्लकीमातृभिन्मुरागोषु योषिति। चम्पके च वसन्ते च' इति मेदिनी, 'सर्वं समस्तमन्यूनम्' इति हेमचन्द्रश्च।

इह वाचालेत्यादिपदस्यार्थान्तरकल्पना तु शब्दशक्त्यनुपस्थापितत्वादसङ्गता। पूर्वपरिगृहीतत्वं बोधयता तच्छब्दत्रयेण चिराभ्यासेन भाराभावात् खेदायोग्यता, वासोवलयकाञ्चीपदैः सूक्ष्मत्वादिभिः सार्वदिकदेहसंसर्गेण च भाराभावौचितो, कुत्सायामनुशिष्टेनाऽऽलचा परमोद्दीपनतया भृङ्गगुञ्जने सखीवात्सल्येन द्वेषः, सकलविशेषणेन वसन्तस्याऽऽपनीयता अनिवार्य्यताहेतुः सामर्थ्यविशेषश्च, सुरभिशब्देन सौरभसम्भारमुखेनोद्दीपनतैव, अद्येत्यनेन इतः पूर्वं वसनादीनां भारायमाणताऽभावेन साम्प्रतिकतत्सद्भावेनाद्भुतम्, तेन प्रश्नौचितो, समस्तशब्देन कस्यापि न सुखजनकत्वम्, तेन तत्कारणगवेषणाऽऽवश्यकता, पृच्छया निदानस्य गोपनम, तेन लज्जा, उद्दीपनसम्पर्केण चेतोवैक्लव्यात्तु कामः; तयोः साम्येन मध्यात्वम्, ते इत्यनेनान्यासां नायकविरहप्रयोज्यतादृशावस्थाविरहादस्याः प्रेमप्राचुर्य्येण ज्येष्ठात्वम्, प्रवासरूपनायकापराधजकोपव्यञ्जकवसनाद्यधारणारम्भचेष्टाविशेषवत्तया धीरात्वं सूच्यते। कारणाभावेऽपि वसनादीनां भारायमाणत्वावगतेर्विभावनाऽलङ्कारश्च॥ ४०॥

तामेव प्रौढामुदाहर्तुमुपक्रमते—

प्रौढा प्रोषितभर्तृका यथा ।

ज्येष्ठधीरप्रगल्भायाः प्रोषितभर्तृकायाः स्थितिं काचिद्वर्णयति—

माला बालाम्बुजदलमयी मौक्तिकी हारयष्टिः
काञ्ची याते प्रभवति हरौ सुभ्रुवः प्रस्थितैव ॥
अन्यद्ब्रूमः किमिह धमनी वर्तते वा नवेति
ज्ञातुं बाहोरहह वलयं पाणिमूलं प्रयाति ॥ ४१ ॥

प्रभवति प्रभौ स्वामिनि प्रिये हरौ श्रीकृष्णे याते मथुरां गते सति सुभ्रुवः सुभगभ्रूलतायाः श्रीराधायाः बालाम्बुजदलमयी नवीनकमलदलप्रचुरा माला तथा मौक्तिकी मुक्तासम्बन्धिनो हारयष्टिर्हारलता तथा काञ्ची मेखला प्रस्थिता प्रयाता एव न तु स्थिता अहह खेदः इहास्मिन् विषये अन्यदुक्तातिरिक्तम् तद्दौःस्थ्यम् किं कियद् ब्रूमः इदमेव तावद्ब्रूमः यद् धमनी नाडी वर्तते अस्ति चलति न वा ? इतीदम् ज्ञातुमवगन्तुम् इव वस्तुतस्तु कार्श्यात् बाहोर्भुजस्य वलयम् पाणिमूलं हस्ताग्रं प्रयाति गच्छतीत्यर्थः । विरहेण सा नितरां कृशेति भावः । तथाच 'नाडी धमनी धामनी धरा' इति नाडीदर्पणः ।

इह हार-वलय-पदाभ्यामेव मुक्तामाला-करभूषणयोर्बोधे निष्पन्ने मौक्तिकबाहुसम्बन्धोपादानेनापक्रमत्वमपुष्टार्थत्वं—

कर्णावतंसादिपदे कर्णादिध्वनिनिर्मितिः । सन्निधानादिबोधार्थम्'

इति मम्मटोक्तरीत्या रत्नान्तरामिश्रणसन्निधानलक्षणविलक्षणार्थोपस्थापकतया वार्यते । एवम् 'अन्यद्ब्रूमः किमिह' इति वाक्यस्य वाक्यान्तरघटकत्वेऽपि नैव गर्भितत्वं, वक्तव्यांशस्यापरिमेयताप्रकाशनेन

'दिङ्मातङ्गघटाविभक्तचतुराघाटा मही साध्यते'

इत्यादिवच्चमत्कारकत्वात् । प्रभवत्पदेन कृतप्रस्थानरूपागसोऽपि परिहारासम्भवः; चेतोहरणकारित्ववाचकेन हरिशब्देनासह्यविरहत्वम्, तेन दौर्बल्यात् मालादिप्रस्थानस्यौचित्यं प्रणयप्रकर्षेण नायिकाया ज्येष्ठात्वञ्च; यात इति क्तप्रत्ययेन नायकगमनस्य भूतत्वेन मालादिप्र-

स्थानौचित्यं, विरहस्योपक्रान्ततया तदानीं नायकस्थितावपि तद्दौःस्थ्यावश्यम्भावश्च; मालीयकमलदलानां बाल्येन भीरुत्वमार्दवे, ताभ्यां झटिति पलायनौचिती; मालाया अम्बुजसम्बन्धेन शैत्यमुखेन तापान्तर्धापनशक्तिः; दलपदेन कोमलता; मयटा तदाधिक्यद्वारा द्रुतं सन्तापहन्तृत्वम्; हारयष्टेः केवलमुक्ताघटितत्वेन शैत्याद्येव; माला-हार-यष्टिकाञ्चीनां स्त्रीत्वनिर्देशेन स्त्रीजातिसहजपक्षपातादीदृश्यापदि परित्यागानौचित्येऽपि सहसा परित्यागेन तासामात्मदाहभीतिं मध्येकृत्य नायिकायाः संज्वरभरः तेन, ज्येष्ठात्वं सन्तापकार्श्याधिक्यरूपं वस्तुतो नायिकाया मालादित्यागमूलं च; एवेन मालादीनां प्रस्थानमेव, न तु नायिकानुरोधेन मनागपि विलम्बः, ततो जडता-खलत्व-दाहभयानि; जिज्ञासया नाडीस्थितौ संशयः, तेनापि विरहवेदनाबाहुल्यं तावता प्रागल्भ्यं च नायिकाया द्योत्यते। धैर्यध्वनिपक्षस्तु नायिकोक्तिवैधुर्यादधुर्य एव। अन्योऽपि वैद्योऽवसन्नस्य रोगिणो जीवनसत्त्वं परीक्षमाणः करमूलात्क्रमेण पाणिमूलं यावदन्वेषत इति वलये वैद्यव्यवहारसमारोपात्समासोक्त्या सङ्कीर्णा कङ्कणपाणिमूलप्रयाणकारणीभूतजिज्ञासाया उत्प्रेक्षणादिवाद्यनुपादानाच्च प्रतीयमानोत्प्रेक्षाऽलङ्कारः।

'मन्दाक्रान्ताऽम्बुधिरसनगैर्मो भनौ तौ गयुग्मम्' इत्युक्तलक्षणं मन्दाक्रान्ता छन्दश्च ॥ ४१ ॥

परकीयां तामुदाहर्तुमाह—

परकीया प्रोषितभर्तृका यथा ।

प्रोषितपतिपरकीयाचरितं काचिदन्यां विस्मिता ब्रवीति—

श्वश्रूः पद्मदलं ददाति तदपि भ्रूसञ्ज्ञया गृह्यते
सद्यो मर्मरशङ्कया न तु तया संस्पृश्यते पाणिना ।
यातुर्वाचि सुहृद्गणस्य वचसि प्रत्युत्तरं दीयते ।
श्वासः किन्तु न मुच्यते हुतवहक्रूरः कुरङ्गीदृशा ॥ ४२ ॥

श्वश्रूः पतिप्रसूः यत्केनापि प्रयोजनेन कौतुकेन वा पद्मस्य दलं पत्रं ददाति वितरति तत् पद्मदलम् अपि ( का कथा वस्त्वन्तरस्य

परदत्तस्य च ) कुरङ्गीदृशा मृगलोचनया तया 'परकीयप्रोषितभर्तृकनायिकया श्वश्र्वा भयेन गौरवेण वा भ्रुवः संज्ञयाऽङ्गीकारसूचकचेष्टया गृह्यत आदीयते केवलं स्वीक्रियते। तु पुनः सद्यस्तत्क्षणो मर्मरस्य शुष्कपत्रध्वनेः तद्वतः शुष्कपत्रस्य वा शङ्कया सन्देहेन पाणिना हस्तेन न संस्पृश्यते नो परामृश्यते। तथा यातुः पतिभ्रातृपत्न्या वाचि वचने पृच्छायां किञ्च सुहृद्गणस्य सख्यादिमित्रवृन्दस्य वचसि प्रश्ने प्रत्युत्तरं प्रतिवाक्यं दीयते किंतु लज्जाभयाभ्यां हुतवहक्रूरः पावकवद्विषमः श्वासः न मुच्यत इत्यर्थः।

तथाच 'पतिपत्न्योः प्रसूः श्वश्रूः' इत्यमरः। 'नामचेतनयोः संज्ञा सूचनायाम्' इति शाश्वतः। 'मर्मरो वस्त्रभेदे,स्याच्छुष्कपर्णध्वनौ तथा' इति मेदिनी। 'उत्तरं प्रतिवाक्ये स्यात्' इति विश्वः। 'उक्तिराभाषणं वाक्यमादेशो वचनं वचः' इति शब्दार्णवश्च।

इह मर्मरोऽस्त्यस्मिन्निति मत्वर्थीयोऽच्प्रत्ययः। श्वश्रूपदमवश्यमनुष्ठेयादेशतां, सा चात्र व्याजासम्भवेन रहस्यप्रकाशाद्भीतिम्; एकवचनं पत्रदलस्याबहुत्वेन झटिति शुष्कत्वेऽशक्यगोपनम्; लट्लकारो दानस्य बुद्धिपूर्वकतया विद्यमानत्वेनापन्नस्य ग्रहणस्य सद्यः प्रतीकार्यत्वम्,अपिस्तदितरदत्तानां यदृच्छयोपनतानाञ्च सन्तापप्रकाशकवस्तूनां सर्वथाऽग्रहणम् भ्रूसंज्ञया ग्रहणम् आज्ञापालनेन तत्रादरं, ततो भीतिम आत्मनो विनयं चातुरीं च; मर्मरशङ्का सन्तापोत्कटत्वम्; यातृपदं सार्वदिकसाहचर्यं छिद्रान्वेषणतत्परत्वं वा; सुहृत्पदमतिप्रणयं; ते च तयोः प्रश्नानामवश्यमुत्तरदानौचितीम्, अन्यथा प्रणयभङ्गरहस्यभेदयोः सम्भवं च; यातृसुहृदोरुपादानं तद्भिन्नैः कृतेष्वपि प्रश्नेषु मौनावलम्बनं; प्रतिः स्वतो भाषणाभावम्, एकवचनमुत्तरस्यैकत्वद्वारेण कथञ्चिदेकमात्रोत्तरदानेऽप्यायासं; श्वासस्य सन्तापो विरहजन्यतां बहिरप्रकाशनं प्रच्छन्नकामिनीत्वं विप्रलम्भशृङ्गाररसाभासञ्च बोधयति। लुप्तोपमयोः संसृष्टिरलङ्कारश्च ॥ ४२ ॥

क्रमप्राप्तां सामान्यां प्रोषितभर्तृकामुदाहर्तुमुपक्रमते—

सामान्यवनिता प्रोषितभर्तृका यथा।

कस्यचन धनिककामुकस्य वञ्चनेन धनोपगमाय वारयुवतेश्चरितं कश्चिदाह—

विरहविदितमन्तः प्रेम विज्ञाय कान्तः
पुनरपि वसु तस्मादेत्य मे दास्यतीति।
मरिचनिचयमक्ष्णोर्न्यस्य बाष्पोदबिन्दून्
विसृजति पुरयोषिद् द्वारदेशोपविष्टा ॥ ४३ ॥

कान्तः प्रियः कामुकः तस्माद्देशान्तरात् एत्यागत्य विरहेण स्वस्य विश्लेषेण तज्जन्यकार्श्यादिहेतुना विदितं प्रतीतम् अन्तर्हृदये स्थितम् अत एव बहिरस्फुटम् प्रेम विज्ञायानुमाय पुनरपि मह्यं वसु धनं दास्यति इत्याशया न तु विरहवेदनया, द्वारदेशे प्रतीहारस्थले उपविष्टा पुरयोषिद्गणिका अक्ष्णोर्लोचनयोः कृतकाश्रुप्रवाहाय कटुतरं मरिचस्य वल्लजस्य चूर्णनिचयं न्यस्य निधाय बाष्पोदबिन्दून् अश्रुजललवान् कामुकप्रतारणायै विसृजति मुञ्चतीत्यर्थः।

कामुकः स्ववियोगेऽश्रुप्रवाहेणात्यनुरक्तां ज्ञात्वा बहुधनं दास्यतीत्याशयैव रुरोद न तु वास्तविकविरहजदुःखेनेति भावः।

तथाच 'प्रतीहारो द्वाद्वरि' इति हैमः 'मरिचं वल्लजम्' इति भावप्रकाशश्च।

अत्र द्वारेत्यादिवेश्याविशेषणं वाक्यान्त उपात्तमपि नैव समाप्तपुनरात्ततादोषावह तस्य वक्ष्यमाणाभिप्रायवत्तया तदर्थं वाक्यस्योत्थिताकाङ्क्षत्वात्। 'मन्थौदन' इत्यादिसूत्रेणोदकशब्दस्योदादेशः। पुरस्य योषिन्नत्वेकस्येति पुरयोषिच्छब्दो गणिकायां यौगिकः। सम्भवति हि इयं पुरयोषिन्मय्यनुरक्ता मद्वियोगजदुःखेन क्रन्दनादित्यनुमितिः। परनिष्ठानुरक्तेरप्रत्यक्षतयाऽनुमेयतोपन्यासः। विदितशब्दस्य ज्ञातार्थत्वमेव, परोक्तं ज्ञापितार्थत्वं तु णिचं विना तावतो न सम्भवि। प्रेम्णो विदितपदार्थप्रसिद्ध्या मनसि निधिवश्चिगूढतया च परिपक्वता प्रकाशनौचिती च; अनुमित्या सर्वथाऽसन्देहयोग्यता; पुनश्शब्देन प्राचोनं वसुदानं; द्वारदेशोपवेशेन तत्र कृताश्रुप्रवाहस्य सर्वाध्वन्यैर्दृश्यत्वेन भ-

टिति कामुककर्णपर्यन्तप्राप्तियोग्यतया भूयो धनलाभसम्भावना; कृतकत्वोपादानेनाश्रुप्रवाहस्य विरहाप्रयोज्यता; मरिचनिचयस्य प्रक्षेपेण भूयस्त्वं च; ताभ्यां पुरयोषित्पदेन च कचिदप्येकप्रान्तरिकप्रेमाभावः; अश्रुबिन्दूनां बहुत्वेन विरहस्यासहनीयतायाः प्रकटनम्, तेन कामुकवञ्चनचातुर्येण स्ववृत्तिवैदुर्यं च सूच्यते। पूर्वार्धार्थस्य परार्धहेतुत्वात्काव्यलिङ्गेनानुप्राणिताऽपह्नुतिरिहालङ्कार इत्यनन्तभट्टभणितं तु हेतुबोधकेतिशब्दोपादानेन काव्यलिङ्गासम्भवात्।

'प्रकृतं यन्निषिध्यान्यत् साध्यते सात्वपह्नुतिः'

इति मम्मटोक्तयोरुपमेयनिषेधोपमानसाधनयोरदर्शनेनापह्नुत्यभावाच्च नातिरुचिरम्, किन्तु द्रविणदाने हेतोः प्रेमविज्ञानस्य बोधनात्काव्यलिङ्गमलङ्कारः॥ ४२॥

अथ खण्डितां निरूपयिष्यंल्लक्षयति—

अन्योपभोगचिह्नितः प्रातरागच्छति पतिर्यस्याः सा खण्डिता।

अन्यस्याः स्वेतरस्त्रियाः उपभोगसूचकचिह्नवान् यस्याः पतिर्दयितः प्रातः सम्भोगोत्तरम् एति सा स्वाधीनपतिकत्वाभिमानस्य खण्डनात् खण्डितेत्यर्थः। लक्षणन्तु स्वेतरनायिकाकर्मकसम्भोगसूचकचिह्नवत्सद्यःसमागतप्रियदर्शनजन्यत्वेन नायिकाविशिष्टदुःखवत्त्वमेव पर्यवस्यति। एतेन खण्डिताया अन्यसम्भोगदुःखितामानवतीभ्यां भेदश्चिन्त्य इति नागेशभट्टोक्तिरेव चिन्त्यतां भजति, लक्षणेषु स्फुटं भेदावभासनात्॥

परीक्षते—

प्रातरित्युपलक्षणम्।

सम्भोगानन्तरकालस्येति शेषः। कालान्तरेऽपि तादृशप्रियदर्शनजनितखेदे तत्त्वस्येष्टत्वात्।

परे तु निशाऽतिरिक्तसमये नारीसम्भोगस्य स्मृतिनिन्द्यतया विद्याविरोध आपततीति रात्रिकृतनायिकासम्भोगोत्तरं प्रातरेव तदुपस्थितेरौचित्यात्, तादृशोदाहरणोपलम्भात्,

निद्राकषायकलुषीकृतताम्रनेत्रो
नारीनखव्रणविशेषविचित्रिताङ्गः।

यस्याः कुतोऽपि गृहमेति पतिः प्रभाते
सा खण्डितेति कथिता कविभिः पुराणैः।

इति भरतमुनिना प्रभातपदोपादानाच्च प्रभातार्थकमेव प्रातश्शब्दं व्याहरन्ति।

लक्षणघटकदुःखसूचकचेष्टामाह—

अस्याश्चेष्टा अस्फुटालाप-चिन्ता-सन्ताप-
निश्श्वास-तूष्णीम्भावाऽश्रुपातादयः।

अस्फुटालापो दुःखादिजन्मा वैस्वर्य्यापरपर्य्यायो गद्गदशब्दः। चिन्ता नायकापराधानुध्यानं दुःखाच्चेतःस्तैमित्यं वा। सन्तापः शारीर ऊष्मा मानसं वैक्लव्यं च। तूष्णीम्भावो मौनम्।

मुग्धां खण्डितामुदाहर्तुमाह—

मुग्धा खण्डिता यथा।

खण्डितमुग्धवधूचरितं काचिद्वदति—

वक्षः किमु कलशाङ्कितमिति किमपि प्रष्टुमिच्छन्त्याः।
नयनं नवोढसुदृशः प्राणेशः पाणिना पिदधे ॥४४॥

हे नाथ! तव वक्ष उरः किमु किंनु कथं वा कलशेन तदुपमितनायिकान्तरकुचेन तत्परिरम्भलग्नकुङ्कुमेन अङ्कितं चिह्नितम् इत्येतत् किमपि किञ्चित् ईषद् अपूर्वरहस्यं वा प्रष्टुमिच्छन्त्याः पिपृच्छिषन्त्या एव न तु लज्जाभयाभ्यां पृष्टवत्या नवोढसुदृशो मुग्धाङ्गनायाः नयनं प्राणेशः न तु प्रेयान् पाणिना पिदधे आच्छादयदित्यर्थः। यथा नेयं तच्चिह्नं पश्येदिति भावः।

तथाच 'पिधानाच्छादनानि च' इत्यमरः। अपीत्यकारस्य भागुरिमतेन लोपे पिदधे इति।

अत्र सपत्नीकुचकलशचिह्नावधारणेऽपि वितकार्थकंकिमुशब्देन प्रश्नेच्छामात्रेण च लज्जाभीत्योरतिरेकः, तेन मौग्ध्यम्, नयनपाणिपदोत्तरैकवचनाभ्यां लोचनयोस्तच्चिह्नविलोकनासक्त्यतिशयेनैकविधव्यापारप्रावण्येनैकत्वमौपचारिकम्, तेनैकतरकरकरणकपिधानौचिती;

प्राणेशपदेनानिवार्य्यता प्रीत्यपात्रता च; नेत्रपिधानेन तस्यास्तच्चिह्नदर्शनासम्भवः, तेन स्वस्य प्रियादुःखापनोदननैपुण्यं झटिति पराशयज्ञातृता च; ततः पिपृच्छिषया च चिह्नदर्शनपरायास्तस्याः खण्डितात्वं व्यज्यते। अनुप्राससंसृष्टं काव्यलिङ्गमलङ्कारश्च ॥ ४४ ॥

मध्यां खण्डितामुदाहर्तुमाह—

मध्या खण्डिता यथा।

मध्यायाः खण्डितायाश्चरितं कश्चिदाचष्टे—

वक्षोजचिह्नितमुरो दयितस्य वीक्ष्य
दीर्घं न निश्श्वसिति जल्पति नैव किञ्चित् ॥
प्रातर्जलेन वदनं परिमार्जयन्ती
बाला विलोचनजलानि तिरोदधाति ॥ ४५ ॥

प्रातः सपत्नीभोगावासादागतस्य दयितस्य उरो वक्षः वक्षोजाभ्यां सपत्न्याः कुचाभ्यां तदीयबहलकुङ्कुमपङ्केन चिन्हितं वीक्ष्य बालाऽप्रगल्भा मध्या वधूः दीर्घमायतं यथा स्यात्तथा न, किन्त्वल्पमेव निश्श्वसिति निश्श्वासं मुञ्चति। तथा किञ्चिदीषदपि नैव जल्पति दयितं वदति भर्त्सयति। किन्तु वदनं मुखं जलेन परिमार्जयन्ती प्रक्षालयन्ती विलोचनजलानि नायकविषयकरोषजनितानि अश्रूणि तिरोदधाति लज्जया भीत्या वा आच्छादयतीत्यर्थः।

तथाच "वधूर्नितम्बिन्यचला बाला" इति धनञ्जयः।

इह द्विजल(व)दोक्तावपि सम्बन्धिभेदान्न कथितपदत्वम्। दयितत्वं ततोऽहितविधानासम्भावनायामपि सद्यस्तद्विधानाद्बहुलोकभरम्; उरसः स्तनमुद्राचिह्नमाश्लेषस्य गाढताम्; विनिश्शेषरूपमीक्षणो विशेषं, नायकापराधेऽसन्देहञ्च; निश्श्वासेऽदैर्घ्यमपत्रपाम्, भाषणाभावो मदनवेदनाम्; ते पुनर्लज्जामदनयोः साम्येन मध्यात्वम्; भर्त्सनाभावो नायकस्य समादरमसकृदनुभूतपूर्वां निर्दयतां वा; अश्रुणो गोपनं दैवात्तथाऽऽचरितुः स्वामिनः समक्षं दुःखप्रकाशनेन कदाचित्तस्य कोपोदयाद्भूयस्तथाऽऽचरणस्य सम्भावनया भीतिं तदीयनृशंसतानिश्चयान्निर्वेदं वा; ईषन्निश्श्वासाभूयस्तूष्णीम्भावा नायिकायाः खण्डितात्वं च प्रक-

टयन्ति । अपह्नुत्यलङ्कारलेखस्तु प्राग्वन्नैव रुचिरः, किन्तु कथञ्चित्काव्यलिङ्गमेव च ॥ ४५ ॥

प्रौढां खण्डितामुदाहर्तुमुपन्यस्यति—

प्रौढा खण्डिता यथा ।

कश्चित् स्वयंकृतापराधः प्रातरागतो दयितया नितरां ह्रेपितः सकौतुकं सहचरं कथयति—

मामुद्वीक्ष्य विपक्षपक्ष्मलदृशः पादाम्बुजालक्तकै-

रालिप्ताननमानतीकृतमुखी चित्रार्पितेवाभवत् ।

रूक्षं नोक्तवती न वा कृतवती निश्श्वासकोष्णे दृशौ

प्रातर्मङ्गलमङ्गना करतलादादर्शमादर्शयत् ॥ ४६ ॥

हे सखे ! विपक्षा च सा पक्ष्मलदृक् वामलोचना तस्याः पराङ्गनायाः पादाम्बुजालक्तकैश्चरणकमलयावकैः आलिप्तं समन्ताद्दिग्धम् आननं यस्य तादृशं मा । अङ्गना कान्ता उद् ऊर्ध्वं वीक्ष्य आनतीकृतं पूर्वतोऽनम्रमपि बलान्नम्रीकृतं मुखं यया तथाभूता, चित्रे आलेख्येऽर्पिता लिखिता इव अभवत् । तथाऽपि रूक्षं परुषं यथा स्यात्तथा न उक्तवती । वा तथा निश्श्वासेन कोष्णे मन्दोष्णे दृशौ नेत्रे न कृतवती । किन्तु केवलं प्रातः मङ्गलं कल्याणप्रदम् आदर्शं मुकुरं करतलात् स्वहस्ततले स्थापयित्वा आदर्शयद् दर्शयामासेत्यर्थः । कथं तवात्रागमने लज्जा नाभूत्, स्वयमेव मुखं दर्पणे वीक्ष्य स्वापराधं निश्चिनुहि, किं मे भर्त्सनाभिरिति नायिकाया आकूतम् ।

तथा च 'सपत्नोऽसहनो विपक्षः' इति हैमः । 'कोष्णं कवोष्णं मन्दोष्णम्' 'दिग्धलिप्तं' इत्यमरः । 'विशेषाः कामिनीकान्ताभीरुबिम्बाधराङ्गनाः' इति शब्दार्णवः । 'आदर्शो मुकुरः स्मृतः' इति हारावली । 'रोचनं चन्दनं हेम मृदङ्गं दर्पणं मणिम् ॥ गुरूनग्निं तथा सूर्यं प्रातः पश्येत्सदा बुधः' इति पुराणं च ।

अत्र प्रशस्तानि पक्ष्माणि सन्त्यस्या इति पक्ष्मला, सिध्मादित्वाल्लच् । ल्यब्लोपेऽधिकरणे करतलादिति पञ्चमी । विपक्षतयोद्वेजकत्वम्; मुखे

चरणालक्तकलेपेनोर्वीकृतश्रीपदलक्षणरतबन्धविशेषविधानम्; मानमपनेतुं चरणपतनं वा; अङ्गलेपस्य गोपयितुमशक्यता; मुखस्य नमनेन विप्रियकारिणो मुखदर्शनापेक्षया तददर्शनमेव वरमित्यौदासीन्यम्; मां गुणवतीं विहाय निर्गुणायामनुरक्तोऽयमित्यविवेकः, यावकलेपदर्शनासहनं स्वस्यैव वा नैर्गुण्यावधारणादवज्ञा लज्जा च; किं वस्तुतः सा सुन्दरी मत्तोऽपि, येनायं तत्रासक्त इति स्वाङ्गेक्षणकौतुकम्; आलेख्यौपम्येन विषादमूढता; रूक्षभाषण–निश्श्वासदृक्कोष्णीकरणाभावाभ्यामुपायशतेनाराधितपूर्वस्याग्रेवमाचरणे प्रवृत्तस्य नायकस्याग्रे खेदप्रकाशनाद् भूयःकोपोदयसम्भावनया भीतिः, आदर्शदर्शनेन वाचालस्य शठस्याग्रे वचनस्याप्रयोजनं स्वयमेव स्वापराधनिर्णये पुनरेवमाचरणाभावसम्भावनादिविप्रलम्भश्च सूच्यते। अनुप्रासोत्प्रेक्षाकाव्यलिङ्गान्यलङ्काराश्च ॥ ४६ ॥

परकीयां खण्डितामुदाहर्तुमुपक्रमते—

परकीया खण्डिता यथा।

खण्डितपरकीयाचरितं कश्चिद्वर्णयति—

कान्तं निरीक्ष्य वलयाङ्कितकण्ठदेशं
मुक्तास्तया परभिया परुषा न वाचः।
दूतीमुखे मृगदृशा स्खलदम्बुपूरा
दूरात्परं निदधिरे नयनान्तपाताः ॥ ४७ ॥

तया प्रसिद्धया बुद्धिगोचरीकृतया वा मृगदृशा वलयाङ्कितः पराङ्गनाया गाढालिङ्गनेन कङ्कणचिह्नितः कण्ठदेशो ग्रीवाप्रान्तो यस्य तादृशं कान्तं निरीक्ष्य विकल्पव्यपगमाय निश्शेषमालोक्य, परेषां नायकवृतीभिन्नजनानां, सम्बन्धिन्या रहस्यप्रकाशाद् भिया परुषाः क्रूराः वाचः न मुक्ता नैवोदीरिताः। परं केवलं दूत्याः सञ्चारिकायाः मुखे स्खलन् परभिया सप्रतिबन्धं पतन् अम्बुपूरः सलिलस्तोमो येभ्यस्ते नयनान्तपाताः कटाक्षविक्षेपाः दूराद्विप्रकृष्टदेशात् निदधिरे निरक्षिप्यन्तेत्यर्थः।

तच्छब्दबोध्यप्रसिद्धिपरिचयाभ्यां नामाग्रहणेन च तदीयदुर्यशःप्र-

ख्यातेर्भीतिः; दृशो मृगदृक्साम्येन चाञ्चल्यम्, तेन स्वहेतू वैक्लव्यरह-स्यभेदसन्देहप्रयोज्यत्रासौ ततः परकीयात्वम्; परस्या नामानुच्चारणेन तद्विषयको नायिकाद्वेषाधीनो द्वेषः; कण्ठस्य कङ्कणाङ्कितत्वेन सौरत-बन्धविशेषविधाननिबन्धनं गाढमुपगूहनम्, तस्य परसम्बन्धितया दुःस-हत्वम्; कान्तत्वेनासह्यापराधेऽपि ततश्चेतसोऽनपाकर्षणीयता; निरा चिह्नदर्शनजन्यतया चाक्षुषज्ञानस्य प्रमात्वम्; परत्वेन ततो भीतेरौचिती, ततः परकीयात्वम्; दूतीमुखदर्शनेन तद्दूत्यस्य प्रतिकूलफलशालितया-ऽसूया, नायकानुशासनार्थेङ्गितम्, अतः परं स्वजीवनासत्त्वसूचनया नायकानुकूलनायाऽभ्यर्थना वा; दूरतो दूतीमुखदर्शनेन लोकाद्भीतिः, स्वय-मविचार्य कृतस्य प्रणयस्येत्थं कुपरिणामौचित्यं वा, तद्भीत्या कैमुतिक-न्यायेन नायकमुखवीक्षणेऽपि भीतिः, तया परानुरक्तता; परमित्यनेन कान्तमुखेक्षणव्यवच्छेदद्वारा तत्र रोषः; पूरपदेनाश्रुभूयस्त्वमुखेन दुःखो-त्कर्षः; कटाक्षाणां निक्षेपेण पुनरनिवृत्तिं द्वारीकृत्य किंकर्तव्यविमूढता चिन्तैव वा, 'दृश्यतामस्य शठत्वम्' इत्युपालम्भश्च; तत इतराङ्गनासङ्ग-चिह्नवत्सद्यःसमागतनायकदर्शनजातयातनया लोकभीत्या परुषवाचाम-नुच्चारणेऽप्यार्थसमाजग्रस्ततद्विषत्तया च नायिकायाः खण्डितात्वं च व्यज्यते। लुप्तोपमाऽनुप्रासालङ्कारौ च ॥ ४७ ॥

सामान्यां तामुदाहर्तुमुपन्यस्यति—

सामान्यवनिता खण्डिता यथा।

खण्डितवारयुवतेश्चरितं कश्चित्कथयति—

उरस्तव पयोधराङ्कितमिदं कुतो मे क्षमा
ततो मयि निधीयतां वसु पुरा यदङ्गीकृतम्।
इति प्रचलचेतसः प्रियतमस्य वारस्त्रिया
क्वणत्कनककङ्कणं करतलात् समाकृष्यते ॥ ४८ ॥

हे शठ! यतः तव इदं प्रत्यक्षम् उरो वक्षः पयोधराभ्याम् आलिङ्ग्य-मानेतरवाराङ्गनायाः स्तनाभ्याम् अङ्कितं तदीयमृगमदमुद्रया कलङ्कि-तं विद्यते। तस्मात् मे मम कुतः कस्मात् कारणात्? क्षमा त्वदागसः सहनशीलता स्यात्। ततो हेतोः पुरा पूर्वं यद् वसु द्रविणं दातुम्

अङ्गीकृतं मया सह विजिहीर्षया प्रतिज्ञातम , तत् मयि निधीयतां मह्यं दीयताम् , इत्येवं वदन्त्या वारस्त्रिया वेश्यया प्रचलं रहस्यभेदात् परहस्तपतनात् प्रणयभङ्गाद्वा भिया लोलं चेतो यस्य तथाभूतस्य प्रियतमस्य बहिरेव तत्त्वेन प्रकाशितस्य करतलात् क्वणत् ग्रहणाद् भुजकम्पनेन शब्दायमानं च तत् कनकस्य स्वर्णस्य कङ्कणं समाकृष्यते । इदानीं तद्वचस्यप्रत्ययेन पुनर्मिलनमसम्भाव्य बलाद् गृह्यत इत्यर्थः ।

परे तु 'करतलम्' इति पाठमेव निश्चित्य पुंसः कङ्कणस्यैकस्य क्वणनमसम्भवीत्यापतद्दूषणवारणाय क्वणत्कनककङ्कणम् इत्यस्य क्रियाविशेषणतां भणन्ति । किन्तु करतलाकर्षणापेक्षया कङ्कणाकर्षणमेव सूपपन्नं प्रतिपद्यामहे, वेश्यानां द्रव्यलिप्सयैव प्राथमिकप्रवृत्तेः, तदभावे करवसनाद्याकर्षणात् ; क्रियाविशेषणत्वेऽपि कामुककङ्कणक्वणनस्य प्राग्वदसम्भवात् , स्वकङ्कणक्वणनन्तु नात्रोपयोगीत्यसामञ्जस्याच्च । क्वणनन्त्वन्तःसुषिरप्रविष्टशर्करासम्पर्कादिभिरुपपादनीयम् ।

तथा च ' वारस्त्री गणिका वेश्या' इत्यमरः ।

इह प्रियतमपदे तमनर्थोऽविवक्षित इत्येके । तदुपचार इत्यपरे । यतिभङ्गसमाधिस्तु प्रागुक्त एव ।

तवेति भवच्छब्दाप्रयोगेण कामुकेऽनादरः, तेन तत्रामर्षः, तावता परोपभोगात्मा तदपराधः; पयोधरपदेन पृथुता, तया तदङ्गवैपुल्यम्, तेन प्रत्यक्षवाचीदंपदेन च तदङ्गस्यागोपनीयता, तया तस्य सद्यःसमुद्भवोत्कटत्वे, ताभ्यां तत्र क्षमाऽभावोचिती; निधानेन वसुदानस्यानिच्छापूर्वकत्वम् ; वारस्त्रीशब्देनैकत्रानानुरागः, तेन कङ्कणाकर्षणोपपत्तिः; वसुपदेनात्याज्यता, तयाऽपि प्राग्वत् ; अङ्गीकारेणावश्यदेयता, तया च सैव प्राग्वत्; चेतसश्चलतया सम्भ्रमभरः, तेन रहस्यभेदात्; परहस्तपतनात् प्रणयभङ्गाद्वा भीतिः, कङ्कणक्वणनेन समाकर्षणद्राधिमा; आकर्षणेन तदासक्तेः पुनरसम्भावना तद्वचस्यविश्वासश्च सूच्यते । अनुप्रासोऽलङ्कारश्च ॥ ४८ ॥

प्रासाधसंरामथ कलहान्तरितां निरूपयंल्लक्षयति—

पतिमवमत्य पश्चात्परितप्ता कलहान्तरिता ।

पतिं प्रियं कृतानुनयमपि नायिकान्तरासक्तिशङ्कया अवमत्य तिरस्कृत्य पश्चात्तदनन्तरं परितप्ता परिदूना अनुशयाना कलहात् प्रियेण सह विग्रहात् अन्तरिता दूरीभूतेत्यर्थः ।

इह पश्चात्पदमनुपादेयम्, तदर्थस्य ल्यपोपस्थापनात् पश्चात्कालिकतापस्यैव परितापत्वप्रसिद्धेश्च ।

अत एव—

प्राणेश्वरं प्रणयकोपविशेषभीतं या चाटुकारमवधीर्य्य विशेषवाग्भिः ।
सन्तप्यते मदनवन्हिशिखासमूहैर्बाष्पाकुलेह कलहान्तरिता हि सा स्यात् ॥

इति भरतेन तदनुदोरितम् । लक्षणन्तु—स्वतादात्म्य-स्वानुनयपरायणप्रियावधीरणप्रयोज्यानुतापवत्त्व-सम्बन्धाभ्यां नायिकाविशिष्टत्वं तत्त्वमित्यमवसेयम् । स्वकृतपत्यवमानोत्तरपरितापवत्त्वमिति प्रकाशलक्षणन्त्वप्रकाशम्, पतिपदोपादानात्परकीयासामान्ययोरव्याप्तं च ।

परिचयाय चेष्टा आचष्टे—

अस्याश्चेष्टा भ्रान्तिसन्तापसम्मोहनिश्वासज्वरप्रलापादयः ।

अस्याः कलहान्तरितायाः । भ्रान्तिरतस्मिंस्तद्बुद्धिः, सन्तापः पश्चात्तापः, सम्मोहो वैचित्त्यम् । आदिपदेन मूर्च्छानिधने बोध्ये ।

मुग्धां कलहान्तरितामुदाहर्तुमाह—

मुग्धा कलहान्तरिता यथा ।

काञ्चिन्मुग्धाकलहान्तरिताचरितं वर्णयति—

अनुनयति पतिं न लज्जमाना
कथयति नापि सखीजनाय किञ्चित् ।
प्रसरति मलयानिले नवोढा
वहति परन्तु चिराय शून्यमन्तः ॥ ४९ ॥

नवोढा नवपरिणीता मुग्धा लज्जमाना प्रारब्धानिर्वाहात् जिह्रती पतिं स्वयमेव प्रणयकलहे पुरा तिरस्कृतं न अनुनयति सान्त्वयति । सखीजनाय सर्वरहस्यसाक्षिणे अपि, का कथाऽन्येषाम्; किञ्चिदीषदपि स्वकर्तव्याकर्तव्यम् अनुभूयमानदुःखं वा न कथयति । स्मर

मलयानिले मलयाचलमारुते प्रसरति वसन्ते मन्दं वहति सति चिराय बहुकालं यावत् शून्यं निस्सीमविरहवेदनया प्रतिपत्तिरहितं सम्मूढम् अन्तरन्तःकरणं हृदयं वहतीत्यर्थः।

अत्रान्तरित्यन्तःकरणपदैकदेशस्य सत्या||सत्यभामेतिवदुपादानम्। अन्यथाऽधिकरणशक्तिप्रधानस्य तस्य कर्मोपस्थापकत्वमनुपपन्नं स्यात्। अनुनयतिः कृतपूर्वं तिरस्कारम्, स च तस्यापराधम्; मुग्धात्वं प्रज्ञाऽप्रौढ्या दृढसंस्तवाभावेन च सदसद्विवेकविरहम्; पतिपदमनुरागप्रकर्षानुदयम्; सखीजनशब्दः एकाम्प्रत्यपि कथनाभावद्वारा त्रपाऽतिरेकम्; अनिलस्य मलयसम्बन्धः सुगन्धं, शैत्यं, वसन्तप्रवृत्तत्वं च, तानि तदुद्दीपनताम्, शून्यहृदयस्य धारणं परितापातिशयम, स चास्याः कलहान्तरितात्वं च व्यनक्ति। अनुनयाभावहेतोर्लज्जाया वाच्यतया काव्यलिङ्गमलङ्कारश्च ॥ ४९ ॥

मध्यां कलहान्तरितामुदाहरिष्यन्नाह—

मध्या कलहान्तरिता यथा।

तच्चरित्रं काचिद्वक्ति—

विरमति कथनं विना न खेदः
सति कथने समुपैति काऽपि लज्जा।
इति कलहमधोमुखी सखीभ्यो
लपितुमनालपितुं समाचकाङ्क्ष ॥ ५० ॥

नायिकायाः प्रणयकलहस्य कथनमाख्यानं विना खेदो दुःखं न विरमति नश्यति। कथने तन्निवेदने सति काऽपि दुरतिक्रमा लज्जा समुपैति स्वत आपतति। इति हेतोः अधोमुखी लज्जया नतानना सखोभ्यः तासां सर्वरहस्यवित्त्वादात्मनो मध्यात्वाद्वा कलहं प्रियेण सह विग्रहं लपितुं निवेदयितुम् अनालपितुं लज्जया अनिवेदयितुं च समाचकाङ्क्ष समीहाञ्चक्रे न तु किंचिदवदत् इत्यर्थः।

तथा च 'अस्त्रियां समरानीकरणाः कलहविग्रहौ' इत्यमरः। 'व्याङ्परिभ्यो रमः' इत्यनेन विरमतीत्यत्र परस्मैपदम्।

इह खेदाविरामेण कथनावश्यकता, 'सुहृज्जनविभक्तं हि दुःखमनुकूलवेदनीयं भवति' इति न्यायेन फलजनकतदाख्यानौचिती च; 'काऽपि' इत्यनेन लज्जाया अनिर्वाच्यतामुखेनावार्य्यता, तया खेदविरामाभावेन च सम्भूय मध्यात्वम्; कलहपदेनागोपनीयता; मुखनमनेन लज्जा; सखीपदेन सर्वरहस्यवेदितया प्रतीकारसामर्थ्येन च कथनौचिती; कथनाभावेच्छया लज्जैव; समस्तैर्नायिकायाः कलहान्तरितात्वं च द्योत्यते ।

एकविशेष्यकविरुद्धनानाधर्मप्रकारकज्ञानोपादानाभावान्नात्र परानुमतः सन्देहालङ्कारः किन्त्वनुप्रासश्च ॥ ५० ॥

प्रौढां कलहान्तरितामुदाहर्तुमुपक्रमते—

प्रौढा कलहान्तरिता यथा ।

काऽपि कलहान्तरिता पत्यवमानद्वारीभूतानि नेत्रादीन्याह—

अकरोः किमु नेत्र ! शोणिमानं<br>
किमकार्षीः कर पद्मतर्जनं वा ।<br>
कलहं किमधा मुधा रसज्ञे !<br>
हितमर्थं न विदन्ति दैवदृष्टाः ॥ ५१ ॥

हे नेत्र! प्रेयसि मानापनोदनाय प्रणमति सति शोणिमानमारुण्यं त्वं किमु व्यर्थम् अकरोरकार्षीः । वा पुनः हे कर ! त्वमपि तदा पद्मेन लीलाकमलेन तर्जनं भीतिप्रदर्शनम्, यद्वा, हे करपद्म ! हस्तकमल ! तर्जनं किं वृथाऽकार्षीः । तथा हे रसज्ञे जिह्वे त्वं तदा क्रुधा तदपराधशङ्काजनितेन कोपेन मुधा व्यर्थं कलहं परुषाक्षरोच्चारणं किं वृथा अधा व्यधासीः । अथवा युष्माकं नायं दोषः, यतः दैवेन विधिना दृष्टा आहताः प्रतिकूलादृष्टा जनाः हितम्पथ्यम् अर्थं विषयं न विदन्ति नावगच्छन्तीत्यर्थः ।

'करपल्लवावरोधम्' इति पाठे तु हे कर ! पल्लवेन अवतंसकिसलयेन, यद्वा, हे करपल्लव ! अवरोधं स्वैरं करग्रहणादौ वारणं किमकार्षीरित्यर्थः ।

तथा च 'किं प्रश्नाक्षेपकुत्सासु' इति रत्नकोशः, 'रसज्ञा रसना जिह्वा' इति हैमः, 'व्यर्थके च वृथा मुधा' इत्यमरः, 'हितं धृते गते पथ्ये' इति विश्वः, 'अर्थो विषयार्थनयोः' इति मेदिनी च ।

अत्यनुचितकारिणामपि युष्माकं नात्र दोषः, यतो दैवे विमुखे हिताहितविवेको नश्यति । तन्ममैवाय दैवदोष इति भावः ।

इह कलहस्य धारणं विधानमेवेति निरुपसर्गस्यापि धाधातोः 'अधा' इत्यत्र विधानार्थकत्वम् । आत्मीयानामपि नेत्रादीनां शत्रुवदाचरणादुपालम्भौचिती; नयति विलोकनविशेषेण सुखजातमिति व्युत्पत्तिमता नेत्रपदेन विपुलसुखदानयोग्यतायामपि तादृशदुःखदानेन भूयोऽसूया, कुपितनायकप्रसादननैपुण्यभाजस्तदानीं शोणिमप्रकाशनानौचित्यं च, ततोऽनुशयातिशयः, करोति हितमिति व्युत्पत्तिमता करपदेन रसं प्रियानुरागं जानातीति व्युत्पत्तिमता रसज्ञापदेन च तर्जनकलहकरणानौचित्यादि, करस्य पद्मतादात्म्यारोपपक्षेऽपि पद्मत्वेन शैत्यद्वारा तापोपशमशीलत्वेऽपि तर्जनेन प्रत्युत तापप्रदानादसूया; आदिचरणत्रयेण यैर्भवद्भिरेव कटाक्षनिक्षेपण-चेलाञ्चलाकर्षण-द्राक्षासदृक्षाक्षरनमवचनरचनाभिः प्रियस्य चेतो वशीकृत्य पूर्वं मम महदुपकृतम्, तैरेवेदानीमारुण्यप्रकटन-तर्जन-भर्त्सनैः प्रियं तिरस्कृत्य मम शात्रवमाचरितमिति तदुपालम्भः; किंशब्दत्रयेणाक्षेपः; तुर्यचरणेन तेषामपराधेऽपि द्वेषाभावः; दैवपदेन स्वातन्त्र्यं परानिष्टोत्पादनपरायणत्वं सदा नैकरूपत्वं च, तैस्तेषामपराधाभावः; दष्टशब्देन भूतैरिव दैवेनाभिनिविष्टानां हिताहितविवेकशून्यता, तया तद्विषयकद्वेषाभावश्च व्यज्यते ।

ये तु कृतनायकतिरस्कारां नायिकां प्रति सख्या उक्तिमिमां मन्यमानाः 'हे अरसज्ञे ! क्रीडारसाज्ञायिनि ! नेत्रयोः शोणिमानं किमकरोः, करपद्माभ्यां तर्जनं वा किमकार्षीः' इत्येवमन्वयं वदन्ति,

तैर्नायिकायास्तत्र पश्चात्तापाभावात्प्रकृतलक्षणसमन्वयः प्रतिविधेयः । तत्र श्रद्धाजाड्ये तु सखीवचसाऽपि कथंचिदुन्नेतुं शक्य एव अनुतापः । सामान्येन विशेषस्य समर्थनात्माऽर्थान्तरन्यासोऽलङ्कारः । मालभारिणी छन्दश्च ॥ ५१ ॥

परकीयां कलहान्तरितामुदाहर्तुमाह—

परकीया कलहान्तरिता यथा।

काचन कलहान्तरितपरकीया सखीं सखेदमाख्याति—

भर्तुर्यस्य कृते गुरुर्लघुरभूद् गोष्ठी कनिष्ठीकृता
धैर्यं कोशधनं गतं सहचरी नीतिः कृता दूरतः।
निर्मुक्ता तृणवत्त्रपा परिचिता स्रोतस्विनी बिन्दुवत्
स क्रोधादवधीरितो हतधिया मातर्बलीयान् विधिः॥ ५२॥

हे मातः! यस्य भर्तुर्दयितस्य कृते निमित्तं गुरुः पितृप्रभृतिः भर्तृगुरुः श्वशुरादिर्वा लघुः तद्वचनावहेलनाद् अगण्यः, यद्वा स्वभावात् लघुर्दूत्या गुरुः श्वश्र्वादिवदाज्ञापालनेनोपासनातः श्रेष्ठः अभूत्। किञ्च गोष्ठी सतीसभा कनिष्ठीकृता निसर्गतः श्रेयस्यपि मया तदुपदेशोल्लङ्घनात् अत्यल्पीकृता अनादृता। तथा कोशधनम् अर्थौघसङ्ग्रहसद्मस्थद्रविणरूपं धैर्य्यं गतं विनष्टम् अभूत्। एवं सहचरी सध्रीची नीतिर्नयः दूरतः कृता तदादिष्टपत्यैकपरायणत्वानाचरणात् विप्रकृष्टां नीता। अथ च त्रपा ह्रीः तृणवच्छुष्पधत् अगणयित्वैव निर्मुक्ता निश्शेषं त्यक्ता। अपिच स्रोतस्विनी सङ्केतमार्गस्था दुस्तरा सरित् बिन्दुवज्जलकणवत् अनायासेन परिचिता संस्तुता निस्तीर्णा। स दयित एव हतधिया विनष्टमत्या मया क्रोधात् तदागश्शङ्कयैवोद्भूतरोषात् अवधीरितः अनुनयन्नपि तिरस्कृतः। तन्नात्र मे दोषः किन्तु विधिर्भाग्यं बलीयान् सामर्थ्यातिशयवानित्यर्थः। बलवत्तरभाग्यप्रेरितयैव मयैवमनुचितमाचरितमिति भावः।

तथा च 'अर्थे कृतेऽव्ययं तादर्थ्ये वर्तते द्वयम्' इति कोशकारः, 'गुरुर्निषेकादिकरे पित्रादौ सुरमन्त्रिणि। दुर्जरालघुनोः' इति विश्वः, 'कनिष्ठोऽतियुवाल्पानुजेषु' 'गोष्ठी सभा' इति मेदिनी, 'कोशोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः' इत्यमरः, 'स्रोतस्विनी निम्नगा च स्रोतोनिर्झरिणी सरित्' इति हैमश्च।

अत्र सभामात्रवाचकस्य गोष्ठीशब्दस्य मान्यत्वव्यक्त्यै सतीसदसि, अर्थौघबोधकस्य कोशपदस्य वैपुल्यादिद्योतनाय तदायतने, संस्तम्भा-

र्थस्य परिचिनोतेरनायासपूर्वकत्वावगतये सन्तरणे लक्षणा। कोशप-दस्य भाण्डागारेऽभिधैवेति कश्चित्।

मातरिति सम्बुद्ध्या श्रेयस्त्वमनुचिताचारगोपकत्वं च; गुरुत्वेन तदाज्ञाऽनुल्लङ्घ्यता; तदुल्लङ्घनेन दयिते प्रेमप्रकर्षः; भर्तृगुरुतिरस्कारेण भर्तुरपि तिरस्कारः; गोष्ठ्याः कनिष्ठीकृत्या तत्कृतस्वगर्हणाया अगण-ना, यदि सतीसभाऽग्रणीरियमेव पुंश्चली तदा का कथाऽन्यासामिति स्वघटितसतीसमाजस्य लोकविहितनिन्दा वा; धैर्यस्य धनत्वारोपेणा-परिहेयता, कोशसम्बन्धेनाप्युपयोगिता; गतशब्देन पुनरावर्तनासम्भ-वः, तेन तद्धानेरसह्यता; नीतेः साहचर्येण त्यागानौचित्यम्; दूरी-कृत्या सान्निध्यासम्भवः; त्रपात्वेन स्त्रीणां नियतभूषणत्वेनात्याज्यता; तृणौपम्येन तत्त्यागे दुःखाभावः; निरा मुक्तेर्ज्ञानपूर्वकत्वम्; स्रोतस्वि-नीपदेन नद्याः प्रवाहाधिक्यादसन्तरणीयत्वम्, विन्दूपमया सन्तरणस्ये-षत्करता; तच्छब्देनावधीरणानौचिती; हतधीपदेन विषादः अयुक्तवि-धायिन्यात्मन्यवज्ञा च; समस्तवाक्येनानुशयः; धिघेर्बलीयस्त्वेन स्वदो-षाभावश्च सूच्यते।

गुरोर्लघुभावस्यापातत एव विरोधात् 'विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः' इति मम्मटलक्षितो विरोधाभासोऽलङ्कारश्च ॥५२॥

सामान्यां तामुदाहर्तुमाचष्टे—

सामान्यवनिता कलहान्तरिता यथा।

अनुशयाना वारवधूरालीमालपति—

यत्पङ्करुहलक्ष्म पाणिकमलं भाग्यालये यद्गुरु-
र्न्यस्तं वा मम यल्ललाटफलके भाग्याक्षरं वेधसा।
तत्सर्वं सखि! यो यथार्थमकरोत्तस्मिन् प्रकोपः कृतो
धिङ् मां धिङ् मम जीवितं धिगतनुं धिक् चेष्टितं धिग्वयः॥५३॥

हे सखि! मम पाणिकमलं हस्ताब्जं यत् पङ्करुहस्य पद्मस्य लक्ष्म सामुद्रिकोक्तं चिह्नं यत्र तादृशम् अस्ति। तथा भाग्यालये भाग्यस्थाने मम जन्मकुण्डल्या नवमकोष्ठे यत् गुरुर्गीष्पतिः वर्तते। वा किञ्च मम ललाटफलकेऽलिकपट्टे वेधसा विधिना भाग्यस्य सूचकम् अक्षरं वर्णं

न्यस्तं विलिखितम् अस्ति। तत्सर्वमशेषं पद्मचिह्नादि यः कामुकः यथार्थं बहुधनं प्रदाय यथातथं सत्यं सफलम् अकरोत्। तस्मिन् भाग्योद्दीपके यतो मया प्रकोपो विपुलरोषः कृतः अतः मां धिक् धिक्कारः निन्दाऽस्तु। तथा मम जीवितं जीवनं धिक् अस्तु। तथा अतनुमनङ्गं धिक् अस्तु। तथा मे चेष्टितं व्यापारं धिक् अस्तु। तथा मम वयः यौवनम् अवस्थां धिक् अस्तु इत्यर्थः।

तथा च 'मत्स्येन सुभगा नारी स्वस्तिकेन वसुप्रदा। पद्मेन भूपतेः पत्नी' इति सामुद्रिकम्, 'चतुर्भूमिकं तद्गृहं सोऽपि भूमीपतेर्वल्लभो वल्लभा भूमिदेवाः। गुरौ धर्मगे' इति चमत्कारचिन्तामणिः, 'यथार्थन्तु यथातथम्' इत्यमरः, 'निन्दाभर्त्सनयोश्च धिक्' इत्यव्ययकोशश्च।

इह 'धिगपरम्' इति पाठं प्रकल्प्य 'अपरं सौन्दर्य्यादि धिक्' इति केषाञ्चिद्व्याख्यानं चिन्तनीयम्, अपरपदस्य तत्राशक्तेः तेनैव चेष्टितवयसोरपि सङ्ग्रहे पुनस्तदुक्त्या पौनरुक्त्याच्च।

भाग्योत्कर्षसूचकलक्ष्मयथार्थीकरणं कामुके प्रकोपात्यन्तानौचितीम्; सा धिक्कारश्चानुचिताचारिण आत्मनोऽविवेकम्; जीवितस्य धिक्कारो न्यक्कृतपरमोदारकामुकसङ्गमसौभाग्यसर्वथाऽभावसम्भावनया नैरर्थक्यम्; अतनोर्धिक्कारस्तादृशनायकातिरिक्तकामुकानुरक्त्युत्पादनेन तन्नायकविषयकनैसर्गिकरत्यनुद्भावनेन चाविवेकम्, चेष्टितस्य धिक्कारः सहसाऽऽरम्भेण परिणामारमणीयताम्; वयसो धिक्कारस्तथाविधसुरतसुखविरहाद्वेश्यापरमोद्देश्यतावद्धनानुपार्जनाच्च नैष्फल्यम्; सर्वं च सम्भूय भूयासमनुशयम्, स त्वस्य कलहान्तरितात्वमावेदयति। भाग्यपदपौनरुक्त्यं पूर्ववत्परिहरणीयम्। ये तु कामस्य तन्वभावेन तादृशविवेकाभावमुचितमेव मन्यन्ते, तेऽपि न परीक्ष्यमाणिनः, तस्य स्थूलशरीरविरहेऽपि लिङ्गशरीरावच्छिन्न आत्मनि तदुत्पत्तेः सम्भवात्, अमुक्तस्य तस्य लिङ्गशरीरासम्बन्धे प्रमाणाभावात्।

भाग्याक्षरलेखकमात्रं वेधसमपेक्ष्य तत्सफलीकृतः कामुकस्याधिक्यप्रतीतेः प्रतीयमानो व्यतिरेकोऽलङ्कारश्च ॥ ५३ ॥

अथ विप्रलब्धां लक्षयति—

सङ्केतनिकेतने प्रियमनवलोक्य समाकुलहृदया विप्रलब्धा।

पूर्वकृतसंकेतानुसारेण मिलितुं गता तत्र दयितमदृष्ट्वा दुःखिता विप्रलब्धा नायकेन वञ्चितेत्यर्थः। तदुक्तं प्रतापरुद्रीये—

'क्वचित्संकेतमावेद्य दयितेनाथ वञ्चिता।
स्मरार्ता विप्रलब्धेति कलाविद्भिः प्रकीर्त्यते ॥' इति।

स्वाधिकरणकप्रियानुपलब्धिप्रयोज्यत्वेन संकेतस्थलविशिष्टदुःखवत्त्वं सामान्यलक्षणे निवेश्य लक्षणं कार्यम्। सङ्केतस्थाने पत्यनवस्थानज्ञानविमनायमानत्वं तत्त्वमिति प्रकाशोक्तलक्षणन्तु संकेतस्थलगमनात् प्रागपि तादृशशाब्दादिज्ञानाद् दुःखितायामतिव्याप्तम् ॥

परिचयार्थं चेष्टा निर्दिशति—

अस्याश्चेष्टा निर्वेद-निःश्वास-सन्तापा-लाप-भय-सखी-जनो-पालम्भ-चिन्ता-ऽश्रुपात-मूर्च्छादयः।

निर्वेद ईर्ष्यादुःखाभ्यामात्मन्यवज्ञा। उपालम्भः सनिन्दभाषणम्। भयं सम्भाविस्वापराधजनायकरोषात्त्रासः। चिन्ता तदनागमहेत्वनुध्यानम्। मूर्च्छा कश्मलम् ॥

मुग्धां विप्रलब्धामुदाहर्तुमाह—

मुग्धा विप्रलब्धा यथा।

काचिद्वदति—

आलीभिः शपथैरनेककपटैः कुञ्जोदरं नीतया
शून्यं तच्च निरीक्ष्य विज्ञुभितया न प्रस्थितं न स्थितम्।
न्यस्ताः किन्तु नवोढनीरजदृशा कुञ्जोपकण्ठे रुषा
ताम्यद्भृङ्गकदम्बडम्बरचमत्कारस्पृशो दृष्टयः ॥ ५४ ॥

आलीभिर्वयस्याभिः शपथैः शपनैः न वयं त्यक्ष्याम इत्यादिव्यवस्थाभिः तथा अनेककपटैर्नैकविधकैतवैः वस्त्वन्तरदर्शनादिच्छलैः कुञ्जोदरं सङ्केतलतामण्डपाभ्यन्तरं नीतया गमितया च पुनः तत्कुञ्जोदरं शून्यं प्रियेण रिक्तं निरीक्ष्य निश्शेषेण कोणेष्वपि विलोक्य विज्ञुभितया मनसि सञ्चलितया व्याकुलहृदा नवोढा नववरिका चासौ नीरजदृक् सरोजाक्षी तया नायिकया न प्रस्थितं कुञ्जात् न प्रयातम्, न वा तत्र स्थितम्।

किन्तु ताम्यन्तो दूयमानाः समग्रकुसुमोपवेशालाभात् खिन्नाः ये भृङ्गाः तेषां यत्कदम्बं वृन्दं तस्य यो डम्बरः समारम्भः आरभटी तस्य ये चमत्कारा विच्छित्तयः तान् स्पृशन्त्याश्रयन्तीति ता लोलतमाः दृष्टयः कुञ्जस्योपकण्ठे पर्य्यन्ते रुषा न्यस्ता निहिता इत्यर्थः।

तथात्र 'शून्यं तु रिक्तम्' इति हैमः, 'नवोढा नववरिका' इति हारावलो, 'आडम्बरः समारम्भे' इति विश्वसारश्च।

अत्रोदरपदस्य मध्यावकाश उपचारः। आलीनां बहुत्वमत्यनुरोधम्; शपथकपटनयनानि नायिकाया गमने स्वतोऽप्रवृत्तिं, सा च त्रपाभीत्यतिरेकेण मुग्धात्वम्, निरुपसर्गेक्षणस्य पौनःपुन्यं तदौत्सुक्यम्, विक्षोभः कामाङ्कुरणेन प्रियवियोगव्यलोकतदनागतिहेतुचिन्ते; अप्रस्थानं प्रियसमागमसम्भावनाम्; अस्थितिस्तदनुपलब्धिम्; उभे तु प्रयाणे कदाचिदागमिष्यत्प्रियादर्शनसम्भवः, स्थितौ तद्रहितकुञ्जेक्षणाद् दुःखोद्भव इत्युभयथाऽपि कुशलाभावाद्व्यग्रतां कर्तव्याप्रतिपत्तिञ्च, दृशि नीरजौपम्यं सजलताम्, सा दुःखं तद्विप्रलब्धतां च; ताम्यत्त्वमिष्टालाभम्, तादृशभृङ्गसाम्यं दृशोऽतिचाञ्चल्यं श्यामत्वं च; कदम्बपदं कटाक्षस्फुटताम्, डम्बरपदं तत्प्रौढिम्; चमत्कारपदं रमणीयताम्; कुञ्जोपान्ते दृष्टिन्यासः प्रतार्यानेत्रीषु सखीषु रोषाद् दिदृक्षां, सम्भाव्यमानागमप्रियमार्गावलोकनं आगतमार्गेण प्रत्यावर्तने सखीकर्तव्यप्रतिरोधशङ्कया नवीनस्वमार्गमार्गणं प्रियहीनस्य कुञ्जस्य वीक्षितुमक्षमत्वं सखीभिः परिहासेन कुञ्जान्तरे गोपितं दयितं सम्भाव्य गवेषणं प्रियकृतसङ्केतवञ्चनया निर्वेदादि प्रेयसा कुतोऽयं मद्वमानः केनापि दृष्टो न वेत्यालोचनं वा गमयति अनुप्रासविरोधोपमाभिः संसृष्टानिदर्शनाऽलङ्कारश्च॥

मध्यान्तामुदाहर्तुं व्याहरति—

मध्या विप्रलब्धा यथा।

तस्याश्चरितं काऽपि वक्ति—

सङ्केतकेलिगृहमेत्य निरीक्ष्य शून्य-

मेणीदृशो निभृतनिश्वसिताधरायाः।

अर्धाक्षरं वचनमर्धविकासि नेत्रं
ताम्बूलमर्धकवलीकृतमेव तस्थौ ॥ ५५ ॥

सङ्केतकेलिगृहम् एकान्तसमागमाय निर्णीतं क्रीडानिलयम् एत्या· गत्य तत् शून्यं दयितेन रिक्तं निरीक्ष्य सर्वतो दृष्ट्वा निभृतं रहः त्रपया मन्दं निश्श्वसितं यत्र तादृशोऽधरो यस्यास्तथाभूताया ईषन्निश्श्वास-कलितदन्तच्छदायाः एणीदृशो मृगाक्ष्याः वचनं सखीं प्रति वचः अर्धान्यसमस्तोच्चारितान्यक्षराणि वर्णा यत्र तादृशम् एव तस्थौ। तथा नेत्रमीक्षणम् अर्धश्चासौ विकास उन्मीलनमर्धविकासः सोऽस्त्यत्रेति तथाभूतम् एव तस्थौ। किञ्च ताम्बूलं वीटी अर्धकवलीकृतं सामिच-वितम् एव तस्थावतिष्ठदित्यर्थः। प्रियं संकेतनिलयेऽनिरीक्ष्य दुःखेन जडेवाभवदिति भावः। तथाहि 'पुंस्यर्धोऽर्धं समेंऽशके' इत्यमरः।

इह सङ्केतकेलिगृहस्य शून्यत्वेनोद्वेजकता; निभृतनिश्श्वासेन त्रपा, दुःखाधिक्येन जाड्यञ्च; दृशा एणीदृक्साम्येन परितः प्रियान्वेषणाय चापलम्; वचननेत्रताम्बूलानामर्धोच्चारणविकासचर्वणैराकस्मिकमद-नवेदना, तया त्रपया सह सम्भूय मध्यात्वम्; वचनादीनां प्रियानुरञ्ज-नायैव विन्यासेन तदलाभे तेषां वैयर्थ्येन निर्वेदः; दृशास्तदवस्थया—

'निष्कम्पा समतारा या मलिना शून्यदर्शना।
तथा समपुटा बाह्यविषयेषु गतस्पृहा ॥
[सा दृष्टिः कथिता शून्या धीरैश्चिन्तानिरूपणैः'।

इत्युक्तलक्षणं शून्यत्वं च सूच्यते।

काव्यलिङ्गेन संकीर्णा, अप्रस्तुतैर्वचनादिभिः कार्यैः कारणस्य दुः-खोद्रेकस्य प्रतीतेः 'अप्रस्तुतात्सामान्यविशेषभावे कार्यकारणभावे, सारूप्ये च प्रस्तुतप्रतीतावप्रस्तुतप्रशंसा' इति रूय्यकलक्षिताऽप्रस्तुत-प्रशंसाऽलङ्कारश्च ॥ ५५ ॥

प्रौढाममूमुदाहर्तुमुपक्रमते—

प्रौढा विप्रलब्धा यथा।

काचिदस्या व्यापारं वर्णयति—

शून्यं कुञ्जगृहं निरीक्ष्य कुटिलं विज्ञाय चेतोभवं

दूती नापि निवेदिता सहचरी पृष्टाऽपि नो वा तया ।
शम्भो ! शङ्कर ! चन्द्रशेखर ! हर ! श्रीकण्ठ ! शूलिन् ! शिव !
त्रायस्वेति परन्तु पङ्कजदृशा भर्गस्य चक्रे स्तुतिः ॥५६॥

नायकसङ्गमाय संकेतं गतया तया नायिकया कुञ्जगृहं लतानिकेतनं प्रियेण शून्यं निरीक्ष्य तथा चेतोभवं कामं कुटिलं जिह्मं घातुकं विज्ञाय विभाव्य दूती सञ्चारिका अपि किमुतान्या न निवेदिता प्रियमानेतुं दुःखं वा नोक्ता। वा तथा सहचरी सखी अपि नो स्वविधेयं तदनागमहेतुं वा पृष्टा नानुयुक्ता। परन्तु पङ्कजदृशा नलिनाक्ष्या तया हे शम्भो! शङ्कर! चन्द्रशेखर! हर! श्रीकण्ठ! शूलिन्! शिव! त्वं मां कामात् त्रायस्व रक्ष इत्येवंरूपा भर्गस्य स्मरहरस्य स्तुतिर्नुतिः चक्रे व्यधायीत्यर्थः।

हे स्मरहर! त्वयैव यदि स्मरो निगृह्येत तदा मे त्राणं स्यात्, अन्यथा जीवनं मे दुर्घटमिति भावः।

तथा च 'स्तोत्रमीडा स्तुतिर्नुतिः' इति हलायुधः, 'हरः स्मरहरो भर्गः' इत्यमरश्च।

अत्र शम्भो शङ्करेत्यादौ प्रातिस्विकार्थव्यञ्जनान्नानवीकृतत्वम्। तद्वस्थवाच्यार्थप्ररोहाच्च न पुनरुक्तवदाभासः। चेतोभवत्वमनिवार्यताम्, सहचरीपदं सर्ववृत्तान्तविज्ञताम्, दूतीनिवेदनसहचरीप्रश्नाभावौ तद्भावे स्मरयातनसम्भवं स्मरारिस्तुत्यौचित्यञ्च, शम्भुपदं सुखोत्पादकतया दुःखहरणसामर्थ्यम्, शं सुखं करे यस्येति योगः सुखस्य करवर्तितया सार्वदिकसुखदाने दाक्ष्यम् आयासाभावञ्च, चन्द्र आह्लादकरः शेखरो यस्येति व्युत्पन्नश्चन्द्रशेखरशब्दः परोपकारप्रतिचन्द्रसम्बन्धाद्व्यतिसुखकारकत्वं तन्मैत्र्या स्मरवशीभावञ्च, हरतीति व्युत्पन्नं हरपदं दुःखहारकत्वम्, तच्च सुखलाभादपि दुःखहानेः परमोऽसतत्वेन स्तवनौचित्यं स्मरसंहारकत्वेनापेक्षां च, श्रीकण्ठशब्दः सन्तप्तजगदुपकाराय गरलमपि पीतवतः परमदयालोरबलाक्लेशापासनस्य सूपपत्तिम्, शूलमस्यास्तीति व्युत्पत्त्या शूलिन्निति पदं सायुधस्य सर्वथा रक्षादाक्ष्यम्, शिवशब्दः स्वतः कल्याणमयस्वरूपस्य

परकल्याणकरणौचित्यं च सूचयति । काव्यलिङ्गानुप्राणिताऽप्रस्तुतप्रशंसाऽलंकारश्च ॥ ५६ ॥

परकीयान्तामुदाहर्तुमाख्याति—

परकीया विप्रलब्धा यथा ।

काऽप्यस्या व्यवसितिं शंसति—

दत्त्वा धैर्यभुजङ्गमूर्ध्नि चरणावुल्लङ्घ्य लज्जानदी-
मङ्गीकृत्य खलान्धकारपटलं तन्व्या न दृष्टः प्रियः ।
सन्तापाकुलया तयाऽथ परितः पाथोधरे गर्जति
क्रोधाक्रान्तकृतान्तमत्तमहिषभ्रान्त्या दृशौ योजिते ॥ ५७ ॥

धैर्यमेव भुजङ्गः पन्नगः तस्य मूर्ध्नि मस्तके चरणौ दत्त्वाऽऽरोप्य किञ्च लज्जैव नदी सरित् ताम् उल्लङ्घ्य तीर्त्वा तथा खला दुर्जना एवान्धकारपटलं तमस्समूहः तत् अङ्गीकृत्याभ्युपगत्य सङ्केतं गतयाऽपि तन्व्या नायिकया तत्र प्रियो न दृष्टः । अथानन्तरं सन्तापेन विरहसञ्ज्वरेण आकुलया विकलया तया पाथोधरे वारिवाहे गर्जति स्तनति सति क्रोधेनाक्रान्तोऽतिरुष्टो यः कृतान्तस्य यमस्य मत्तः क्षीबो महिषः सैरिभः तस्य भ्रान्त्या भ्रमेण परितः सर्वदिक्षु दृशौ लोचने योजिते निक्षिप्ते इत्यर्थः ।

अतिसाहसेन सङ्केतं गत्वाऽपि प्रियमदृष्ट्वा दुःखाधिक्येन मृत्युमुत्प्रेक्षमाणा स्वं नेतुमागतस्येव यमस्य मत्तमहिषं तमःस्तोमं मन्यमानाऽपश्यदिति सारांशः ।

इहारोपेण सर्पशिरसि चरणारोपणवद्धैर्यत्यागस्याविधेयता; सर्पशिरसि पदद्वयदानेन साहसिक्यम्, तेन प्रीत्युत्कर्षः तन्मयमनस्कता वा; लज्जाया नदीत्वारोपेणालङ्घ्यता, तल्लङ्घनेन प्राग्वदेव; खलेषु तमःस्तोमत्वारोपेण गतिप्रतिबन्धकत्वादि, ततोऽपि पूर्ववत्; तन्वीत्वेन विरहवेदनासहिष्णुता; मेघस्तनितसहभावेन वियोगासह्यता; महिषस्य क्रोधाक्रान्तत्व—यमीयत्व—मत्तत्वैर्भीषणत्व-मरणोद्यमा-निवार्यत्वानि; भ्रान्त्या चित्तानवस्थितिः, तया विरहपीडोद्रेकश्च व्यज्यते ।

रूपकस्योपक्रान्ततया 'घनान्धकारपटलम्' इति पाठो नातिमनोरमः।

परोक्ता धैर्यं भुजङ्ग इवेत्याद्युपमा तु मूर्ध्नि पददानाद्यन्वयबाधात्त्य-ज्यते। एवं सहोक्तितुल्ययोगिते अपि। किन्तु रूपकसंसृष्टो भ्रान्तिमदलङ्कारश्च ॥ ५७ ॥

सामान्यां तामुदाहर्तुमुपन्यस्यति—

सामान्या विप्रलब्धा यथा।

काचिदभिदधाति—

कपटवचनभाजा केनचिद्वारयोषा
सकलरसिकगोष्ठीवञ्चिका वञ्चिताऽसौ।
इति विहसति रिङ्गद्भृङ्गविक्षिप्तचक्षु-
र्विकचकुसुमकान्तिच्छद्मना केलिकुञ्जः ॥ ५८ ॥

सकलरसिकगोष्ठ्याः समस्तविदग्धमण्डल्याः वञ्चिका कृत्रिमविभ्रमप्रकाशेन द्रविणग्रहणात् विप्रलम्भिका असौ इयं वारयोषा वेश्या केनचित् अप्रसिद्धनाम्नाऽचिन्त्यचातुर्येण वा कपटवचनभाजा व्याजोक्तिभृता यूना वञ्चिता सङ्केतस्थलानागमेन प्रतारिता इति कारणात् रिङ्गन्तश्चलाचला भृङ्गा एव विक्षिप्ते परितः प्रेरिते चक्षुषी यस्य तादृशः केलिकुञ्जः क्रीडासङ्केतितलतामण्डपः विकचानां फुल्लानां कुसुमानां कान्तेः रुचेः छद्मना कपटेन विहसति इव इत्यर्थः।

धूर्ततमाऽप्येषा कथमनेनाहो वञ्चितेत्यतिकौतुकेन विस्मेरस्य कुञ्जस्य हासो न तु कुसुमस्य विकास इति भावः। अत्र चरमचरणेऽष्टमवर्णे यतेरनुशासनेऽपि तुगभावसम्भावनया यतिर्न छन्दोऽन्तर्गता, तद्भङ्गेऽपि न छन्दोभङ्ग इति छन्दोहारलताकृत्सम्मतया छन्दोभङ्गभिया नानुरोधो व्यधायि।

साकल्यं रसिकता च वञ्चनानर्हतां मध्येकृत्य कौतुकोत्कर्षम्, गोष्ठ्या वञ्चकत्वं वञ्चनानैपुण्यातिरेकम्, कुञ्जस्य केलिसम्बन्धोऽपरिहेयत्वेनात्मीयताम्, कुसुमकान्तौ हासत्वोत्प्रेक्षा विस्मयाधिक्यप्रयोजकत्वञ्चावगमयति।

पराकातिशयोक्तेर्भित्तिरूपता, न तु प्राधान्यम्, उत्प्रेक्षया क्रोडीकारात्। किन्तु छद्मपदोपादानादिवाद्यनुपन्यासाच्च प्रतीयमाना सापह्नवोत्प्रेक्षा भृङ्गेषु चक्षुष्ट्वारोपाद्रूपकेण संसृज्यते च ॥ ५८ ॥

अथ प्राप्तावसरामुत्कां निरूपयति—

संकेतस्थलं प्रति भर्तुरनागमनकारणं या चिन्तयति सोत्का ।

सङ्केतीकृतस्थाने स्वयमुपस्थाय दयितानुपस्थितिहेतुं ध्यायन्ती उत्कोत्कण्ठितेत्यर्थः।

लक्षणन्तु स्वाधिकरणकाधिष्ठानवत्त्व—स्वाधिकरणकप्रियकर्तृकाधिष्ठानाभावहेतुचिन्तावत्त्वाभ्यां सङ्केतस्थलविशिष्टत्वं सामान्यलक्षणे प्रवेश्य विधेयम्। तदुक्तं शृङ्गारतिलके—

'उत्का भवति सा यस्याः सङ्केतं नागतः प्रियः।
तस्यानागमने हेतुं चिन्तयन्त्याकुलं यथा' ॥ इति।

परीक्षमाणः सङ्केतपदकृत्यं दर्शयति—

अवधिदिवसानागतप्रेयसि प्रोषितपतिकायां नातिव्याप्तिः, तस्या भर्तुरवधिदिवसे भवनागमननियम इति सङ्केतपदेन व्यावर्तनात्।

अवधीकृतदिनेऽपि यस्याः प्रोषितपतिकायाः प्रियो नायातः, तस्यां प्रियानागमहेतुचिन्तायाः सत्त्वादतिव्याप्तिस्तु नैव स्यात्, यतः तत्प्रियस्य तद्दिने गृह एव न तु सङ्केते समागन्तुं निश्चय इति सङ्केतस्थलवैशिष्ट्याभावः स्फुटः।

लक्षणोपयोगिनीश्चेष्टाः प्रकाशयति—

अस्याश्चेष्टा अरति-सन्ताप-जृम्भा-ऽङ्गाकृष्टि-कपटरुदित-स्वावस्थाकथनादयः।

अरतिः विषयेष्वरुचिर्विद्वेषो वा। जृम्भा मुखविकासः। अङ्गाकृष्टिः तज्जन्यमङ्गमोटनम्। कपटेन लज्जाहेतुकेन यत्किञ्चिद्व्यपदेशेन क्रन्दितम्। स्वस्या अवस्थायाः कथनम्;

तथाच दशावर्णनमुखेन तत्स्वरूपमनुशास्ति मुनिः—

उद्दाममन्मथमहाज्वरवेपमानां
रोमाञ्चकण्टकितमङ्कमावहन्तीम्।
संवेद वेपथुघनोत्कलिकाऽऽकुलाङ्गी-
मुत्कण्ठितां वदति तां भरतः कवीन्द्रः' ॥ इति।

मुग्धोत्कामुदाहर्तुमुपक्रमते—

मुग्धोत्का यथा।

तद्व्यवसायं काऽपि ब्रवीति—

यन्नाद्यापि समागतः प्रिय इति प्रायः प्रपेदे परा-
मित्थं चेतसि चिन्तयन्त्यपि सखीं न व्रीडया पृच्छति।
दीर्घं न श्वसितं दधाति चकितं न प्रेक्षते केवलं
किञ्चित्पक्वपलाण्डुपाण्डुररुचिं धत्ते कपोलस्थलीम्॥ ५९ ॥

यद्यस्मात् हेतोः प्रियः अद्यापि अधुनाऽपि अत्र न समागत इति अतः हेतोः परां मदितरां प्रेयसीं प्रायो भूम्ना प्रपेदे विहाराय प्रापाङ्गीचक्रे वा। इत्थमनया विधया चेतसि हृदि चिन्तयन्ती ध्यायन्ती अपि नायिका सखीम् आलीं व्रीडया त्रपया रहस्यभेदाद्भिया च प्रियानागतिहेतुं न पृच्छति नानुयुङ्क्ते। तथा दीर्घम् आयतं, श्वसितं श्वासं न दधाति न वहति किन्तु निभृतं निःश्वसिति। किञ्च चकितं दुःखेन लोलं न प्रेक्षते किन्तु धीरं पश्यति। केवलं परं किञ्चिदीषत् पक्वस्य परिणतस्य पलाण्डोः सुकन्दस्येव पाण्डुरा पाण्डुः श्वेतगौरी न तु परीक्षा हरिता तस्य पाकेऽतथात्वात्, रुचिर्यस्यास्तादृशीं कपोलस्थलीं धत्ते धारयतीत्यर्थः।

तथाच 'प्रायो भूम्नि' 'पलाण्डुस्तु सुकन्दकः' इत्यमरः, 'पाण्डुस्तु पीतभागार्धः केतकीधूलिसन्निभः' इति शब्दार्णवश्च।

इह प्रियत्वेन तदनागमे दुःखम्; समा भावनया तन्नित्यसान्निध्यम्, तेनातिप्रीतिः, तया तदनागमे दुःखौचिती; अपिना चिरप्रतीक्षा; प्रायशब्देन सम्भावना, तस्यामपि दुःखेन निश्चये दुःखोत्कर्षसम्भवः, शत्रु-

वाच्चिपरपदेन द्वेषः; प्रेण पराऽऽप्तेः श्लाघापूर्वकत्वम्, तेन स्वदुःखाधिक्योपपत्तिः; इत्थंशब्देन चिन्ताप्रकारबाहुल्यम्; सखीत्वेन पृच्छौचित्यम्; तथाऽन्यप्रश्नेन; दीर्घश्वासचकितप्रोत्तणाभावेन च वाच्यलज्जाप्रकर्षः; कपोलपीतिम्ना विरहवैक्लव्यं च द्योत्यते।

पूर्वापादितं पक्वपाण्डुरपदयोरन्यतरानर्थक्यं त्वपोदितम्, अनुप्रासोपयोगित्वात्, ईषत्पाके पलाण्डुरुच्चैरुत्कर्षस्य प्रसिद्धत्वात्, पक्वपलाण्डो रक्तिम्नोऽप्युपलब्धेस्तस्य प्रकृते तद्वैवलव्याव्यञ्जकतया नोपयोग इति पीतांशभासकपाण्डुरपदसार्थक्याच्च।

एवं संशयालङ्कारलेखोऽप्यसमञ्जसः, साम्योत्थापितवितर्क एव तत्स्वीकारात्। साम्यद्योतनाभावादेव प्रायशब्दसत्त्वेऽपि नोत्प्रेक्षाऽपि। परन्तु पृच्छादिहेतुसमवायेऽपि तदभावोक्तेर्विशेषोक्तिरनुप्रासेन संसृज्यते च॥ ५६॥

मध्योत्कामुदाहर्तुमाह—

मध्योत्का यथा।

तद्व्यापारं काचिद्वर्णयति—

आनेतुं न गता किमु प्रियसखी? भीतो भुजङ्गात्किमु?
क्रुद्धो वा प्रतिषेधवाचि किमसौ प्राणेश्वरो वर्तते।
इत्थं कर्णसुवर्णकेतकरजःपातोपघातच्छला-
दक्ष्णोः काऽपि नवोढनीरजमुखी बाष्पोदकं मुञ्चति॥६०॥

किमु मम प्रिया परमोपयोगितया दयिता च सा सखी प्राणेश्वरम् आनेतुमागमयितुं तदन्तिके न गता न ययौ? तद्गमनेऽपि किमु किंवा स भुजङ्गात् पथि संचरतः सर्पात् भीतस्त्रस्तः? वाऽथवा अभीतोऽपि असौ प्राणेश्वरो जीवितेशः किम् प्रतिषेधवाचि तदीहितक्रीडानिषेधवचसि मयोक्ते क्रुद्धः अभीप्सासिद्ध्या रुष्टः वर्तते? इत्थममुना प्रकारेण चिन्तयन्ती काऽपि नवोढं सद्यःसमुद्भूतं नीरजं कमलमिव मुखं यस्यास्तादृशी नायिका अक्ष्णोर्दृशोर्मध्ये कर्णयोः स्थितस्य सुवर्णकेतकस्य पीतकेतकीकुसुमस्य रजसां परागाणां पातेन उपघातस्य पीडायाः छलात्कपटात् बाष्पोदकमश्रुसलिलं मुञ्चति विसृजतीत्यर्थः।

नेत्रमध्ये केतकपरागपातजवेदनां व्यपदिश्य प्रियानागमजन्यदुःखेन रोदितीत्यभिसन्धिः ।

केचित्तु प्रियसखी आनेतुं न गता, किन्तु गतैवेत्यादिकाकुमाश्रित्य व्याचक्षते, परन्तु चिन्तायास्तदानुकूल्यं गुणीभूतव्यङ्गताप्रतिकृतिश्च चिन्तनीये ।

अत्र सखीत्वेन चिरपरिचयवशादसकृत्परीक्षा, प्रियतयोपकारित्वम्, ताभ्यामगमनासम्भवः; किम्वादिशब्दैर्वितर्कः; असाविति निर्देशेन प्राक्तनं हार्दं वा तत्सान्निध्यम्; प्राणेश्वरत्वेन दुःखविघातौचिती प्राणापराध एव न तु वचसोऽपराधे क्रोधौचित्यं वा; सख्याः प्रियत्वेन प्रथमकोटेः, प्रियपौरुषोत्कर्षप्रसिद्ध्या द्वितीयकोटेः, प्राणेश्वरत्वेन तृतीयकोटेश्च बाधः; आगमनहेतुसत्त्वेऽप्यनागमनेन चिन्तोत्कर्षसामञ्जस्यम्; सद्यःसमुद्धृतपङ्कजस्योपमानत्वेन मुखेऽश्रुकलितत्वेषन्म्लानत्वे; रजःपदेन सूक्ष्मतया झटिति निस्सारणाशक्यता; पातस्य स्वतोभूतत्वेनाप्रतिकार्य्यता; छलेन चिन्तावैक्लव्यगोपनम्, तेन त्रपा, तया सखीप्रेषणद्योत्यकामेन च मध्यात्वं; चिन्तयोत्कात्वं च सूच्यते ।

अश्रुद्रुतिहेतुभूतं प्रियानागमचिन्तादुःखं निरस्य परागपातोपघातस्य स्थापनातोऽपह्नुतिरुपमया संसृज्यते च ॥ ६० ॥

प्रौढोत्कामुदाहर्तुमुपन्यस्यति—

प्रौढोत्का यथा ।

सङ्केतं कृत्वाऽप्यनागते श्रीकृष्णे दूना श्रीराधा निकुञ्जादीन्पृच्छति—

भ्रातर्निकुञ्ज ! सखि यूथि ! रसाल बन्धो !
मातस्तमस्विनि ! पितस्तिमिर ! प्रसीद ।
पृच्छामि किञ्चिदिति नीरधराभिरामो
दामोदरः कथय किं न समाजगाम ॥ ६१ ॥

हे भ्रातर्निकुञ्ज ! हे सखि यूथि मागधि ! हे बन्धो बान्धव रसाल चूत ! हे मातस्तमस्विनि कृष्णरजनि ! हे पितस्तात तिमिर तमिस्र ! त्वं प्रसीद उत्तरं दातुं प्रसादं कुरु । नीरधरस्य नवघनस्येवाभिरामः

सुन्दरः दामोदरः श्रीकृष्णः किं केन कारणेन अत्र न समाजगाम इतीदं किञ्चिद् अल्पं यदहं पृच्छामि तत्कृपया कथय ब्रूहीत्यर्थः।

मदविदितमपि कदाचित्तद्धेतुमिह स्थित्या भवन्तो जानीयुरिति भावः।

तथा च 'मागधी यूथिका' इति हैमः, 'चूतो रसालः' इत्यमरः, 'किं प्रश्नाक्षेपकुत्सासु' इति शाश्वतश्च।

इहौत्सुक्यद्योतनाद्गर्भितत्वं न दोषः। निकुञ्जस्य भ्रातृत्वेनेष्टसम्पादकता; यूथ्याः सखीत्वेन प्रियनिष्ठरत्यधिकोद्दीपकत्वाद्धितत्वम्; रसालस्य बन्धुत्वेन दोलान्दोलाद्युपद्रवसहनात् प्राग्वदुपयोगित्वाद्वाऽभिमतत्वम्; तमस्विन्या मातृत्वेन रहस्यगोपकतया हितत्वम्; रजनीरूपजननीसंय्योगितया तिमिरस्य पितृत्वेन रजनीक्रियमाणरहस्यगोपने साहाय्यकरणात्प्रेष्ठता; सम्बन्धोल्लेखेनानुरोधकरणस्य स्वप्रश्नस्य चौचित्यम्; दामोदरपदेन व्यसनिता, तयाऽन्यत्र गमनसम्भवः, तेन चिन्तोपपत्तिः; श्रीकृष्णस्य घनसावर्ण्येन तमस्विन्यामागमनेऽनुपलक्ष्यता; अभिरामतया चित्ताकर्षकत्वं च द्योत्यते।

रूपकोपमा संसृष्टिरलङ्कारश्च ॥ ६१ ॥

परकीयां तामुदाहर्तुमभिधत्ते—

परकीयोत्का यथा।

उत्कण्ठिता सा चिन्तयति—

स्नातं वारिदवारिभिर्विरचितो वासो घने कानने
पुष्पैश्चन्दनबिन्दुभिर्मनसिजो देवः समाराधितः॥
नीता जागरणव्रतेन रजनी व्रीडा कृता दक्षिणा
तप्तं किं न तपस्तथापि स कथं नाद्यापि नेत्रातिथिः॥ ६२॥

वारिदवारिभिर्घनसलिलैः तपसे, पक्षे दयितप्रतीक्षया स्थाणुवत् स्थितया मया स्नातम्। तथा तदर्थं घने कानने निबिडाऽरण्ये विरक्त्या पक्षे रहस्यभेदभीत्या वासोऽवस्थितिः विशेषेण रचितः चिरेण विहितः। किञ्च पुष्पैः चन्दनबिन्दुभिः पाटीरद्रवविप्रुड्भिः पूजोपचाररूपैः पक्षे प्रसाधने धम्मिल्लनिहितैर्ज्योत्स्नाऽभिसारे स्वगोपनाय लिप्तैश्च

मनसिजो देवः हृद्वर्त्यात्मा पक्षे कामः सम्यक् आराधित उपासितः । अपिच जागरणव्रतेन जपादिव्यासङ्गेन पक्षे प्रियानागमहेतुचिन्तया शयनाभावनियमेन निशा यामिनी नाता यापिता । एवं व्रीडा लोकलज्जा तपोऽन्तरायत्वात् पक्षे तत्प्राप्तिप्रतिबन्धकत्वात् दक्षिणा कृता तपःप्रतिष्ठायै पक्षे सम्भोगसम्पदे ससङ्कल्प त्यक्ता । इत्थमेवं रीत्या मया किं तपः न तप्तं न नाचरितम् अपि त्वाचरितमेव । तथाप्येऽमपि स देवः प्राण्य ईश्वरः पक्षे क्रीडाकृतिप्रियः अद्यापोदानीं रजन्यवसानेऽपि कथं केन हेतुना मे नेत्रयोरतिथिर्विषयः न भवति इत्यर्थः ।

तपसेश्वरसाक्षात्कारो यथा भवति तथैव क्लेशेन प्रियसाक्षात्कारः समुचितोऽपि कथं न भवतीति भावः ।

तथा च 'बिन्दुर्वेदितृविप्रुषोः' इति शाश्वतः, 'दक्षिणाऽवाचीयज्ञदानप्रतिष्ठयोः' इति विश्वश्च ।

अत्राद्येति पदं कालविशेषे लाक्षणिकम् । वर्षस्नानं तपसे, पक्षेप्रियमिलनाय स्थाणुवद्बहिरवस्थानम् , वर्षबाहुल्यञ्च तन्मार्गस्य पिच्छिलतया गतिक्लेशाधिक्यम् ; वर्षस्नानघनवनवासादि तपसो दुश्चरत्वम्, पक्षे आसक्त्यतिरेकः; तत् तदीयसाक्षात्कारोचितीम् ; तदभावश्चिन्तोपपत्तिम् ; प्रियरतेर्गोप्यता परकीयात्वं च व्यनक्ति ।

साक्षात्कारकारणसमवधानेऽपि तद्विरहादनुक्तनिमित्तविशेषोक्तिरलङ्कारश्च ॥ ६२ ॥

सामान्यां तामुदाहर्तुमाचष्टे—

सामान्यवनितोत्का यथा ।

काचिद्व्याहरति—

कथं न कान्तः समुपैति कुञ्ज-
मित्थं चिरं चेतसि चिन्तयन्ती ।
अस्रावयन्निष्पतदश्रुधारा
वाराङ्गना काऽपि धनाभिलाषात् ॥ ६३ ॥

कान्तः बहुधनदानात् प्रियः कुञ्जं सङ्केतलतागृहं कथं कस्माद्धेतोः

न समुपैति न समुपागच्छति। इत्थमनेन प्रकारेण चेतसि चिरं बहुकालं यावत् चिन्तयन्ती ध्यायन्ती काऽपि वाराङ्गना वेश्या धनाभिलाषाद् द्रविणेच्छया निष्पतन्त्यो विगलन्त्यश्च ता अश्रुधारा नेत्राम्बुप्रवाहास्ता अस्रावयत् कटुद्रव्यनिक्षेपादिना अवाहयदित्यर्थः।

प्रियवञ्चनाय कृतकं रुरोदेति वर्तुलार्थः।

अत्र कान्तत्वेन धनदायिता; चिरविधानेन चिन्ताया वैपुल्यम्; स्रावणेनाश्रुधाराणां स्वतोऽप्रवृत्तिः, तया कृत्रिमत्वम्, तेन वास्तविकप्रेमाभावः, तेन धनाभिलाषेण चिन्तया च सामान्योत्कात्वं च सूच्यते।

अनुप्रासालङ्कारः। 'उपेन्द्रवज्रेन्द्रकवज्रिकाभ्यां सम्मिश्रिताश्चेदुपजातिभेदाः'। इति च्छन्दोहारलतालक्षितोपजातिच्छन्दश्च॥ ६२॥

अथ वासकसज्जां निरूपयल्लक्षयति—

अद्य मे प्रियवासर इति निश्चित्य या सुरतसामग्रीं सज्जीकरोति, सा वासकसज्जा।

प्रियवासरः प्रियमिलननिश्चितावसरः सुरतसामग्रीमङ्गवेषभूषातल्पप्रदीपभोगावासादि सज्जीकरोति परिष्करोति सा सज्जयतीति सज्जा, वासके सज्जा वासकसज्जेत्यर्थः। वासरशब्द इह प्रियागमनिश्चयानन्तरसमयमात्रोपलक्षकः। तत्र वासकशब्दार्थं बोधयति—

वासको वारः।

वासकशब्दो वारवाचक इत्यर्थः। यत्तु प्रमाणानुपलम्भाद्वासकशब्दस्य वारार्थकत्वमनुपादेयमित्यनन्तेनामूलमाक्षिप्तम्, तत्

भरताद्यैरभिदधे स्त्रीणां वारस्तु वासकः।

इति लिङ्गभूपानुशासनप्रतिकूलतया चिन्त्यम्। परे तु—

सा तु वासकसज्जा स्यात् सज्जिते वासवेश्मनि।
प्रियमास्तीर्णपर्यङ्के भूषिता या प्रतीक्षते॥

इति भोजराजोक्तिमनुरुध्य वासकशब्दं वासगृहार्थकं मन्यन्ते। लक्षणन्तु स्वप्रतीक्षावत्त्व-स्वनिश्चयानन्तरसमयावच्छिन्नसुरतसामग्रीपरिष्कारपरत्वाभ्यां प्रियागमनविशिष्टत्वं सामान्यलक्षणे प्रवेश्य विधेयम्।

तद्व्यापारान्दर्शयति—

अस्याश्चेष्टा मनोरथ-सखीपरिहास-दूतीप्रश्न-सामग्रीसम्पादन-मार्गविलोकनादयः।

मनोरथः प्रियदर्शनाद्यभिलाषः, परिहासो नर्मवचः, दूतीं प्रति प्रश्नो दूतीप्रश्नः, सामग्री पूर्वोक्तवेषादिकारणकूटम्।

मुग्धवासकसज्जामुदाहर्तुमाचष्टे—

मुग्धा वासकसज्जा यथा।

दृष्टसच्चरिता काऽपि सकौतुकं ब्रूते—

हारं गुम्फति तारकाऽतिरुचिरं ग्रथ्नाति काञ्चीलतां
दीपं न्यस्यति किन्तु तत्र बहुलं स्नेहं न दत्ते पुनः।
आलीनामिति वासकस्य रजनौ कामानुरूपां क्रियां
साचिस्मेरमुखी नवोढसुमुखी दूरात्समुद्वीक्षते॥ ६४॥

तारकावदुडुतुल्यमतिरुचिरं मञ्जुतरं हारं मुक्तामालां गुम्फति सन्दृभति। तथा काञ्ची रशना लतेव तां ग्रथ्नाति विरचयति। किञ्च दीपं न्यस्यति स्थापयति प्रज्वालयति किन्तु पुनः तत्र दीपे बहुलमधिकं स्नेहं तैलं न दत्ते न विधत्ते। इति एवं वासकस्य प्रियमिलननिर्णीतसमयस्य रजनौ निशि आलीनां वयस्यानां कामानुरूपां स्वाभिलाषानुसारिणीम् अनङ्गानुकूलां वा क्रियां व्यापारं साचि तिरश्चीनं स्मेरमीषद्धसितं मुखं यस्याः सा नवोढा चासौ सुमुखी दूरात् न तु निकटं गत्वा समुद्वीक्षते सस्पृहं विलोकयतीत्यर्थः।

अहो अति चतुरा एताः सख्यः, यदनुक्ता अपि मदिच्छानुरूपं कामानुकूलं वा व्यवहरन्तीति तादृशदर्शनाकूतम्। तथा च 'इच्छामनोभवो कामौ' इत्यमरः।

इहालीनां हारगुम्फनादि नायिकायाश्शालीनताम्; बहुतैलदानाभावो भाविदीपद्युतौ तस्याः प्रियकृतकरग्रहणादिनाऽपत्रपाम्; रजनौ विधानं क्रियाया निगूढताम्, सा दर्शने मुखतिरश्चीनता च ह्रियं सखी-

परिहासभीतिश्च; स्मेरता तु मदनाङ्कुरणम् ; सर्वं पुनर्मौग्ध्यं वासकसज्जात्वं च व्यनक्ति। उपमालङ्कारश्च ॥ ६४ ॥

मध्यां तामुदाहर्तुमभिधत्ते—

मध्या वासकसज्जा यथा ।

कविरुत्प्रेक्षते—

शिल्पं दर्शयितुं करोति कुतुकात् कल्हारहारस्रजं
चित्रप्रेक्षणकैतवेन किमपि द्वारं समुद्वीक्षते ।
गृह्णात्याभरणं नवं सहचरीभूषाजिगीषामिषा-
दित्थं पद्मदृशः प्रतीत्य चरितं स्मेराननोऽभूत्स्मरः ॥ ६५ ॥

पद्मदृक् शिल्पं कलानैपुण्यं दर्शयितुं लोकान् वीक्षयितुं कुतुकात् यदृच्छया वस्तुतो भाविविहारोपयोगाय कल्हाराणां सौगन्धिकानां हारो मुक्तावलीव स्रङ् माला, यद्वा हारा मनोहरा चासौ स्रक् तां करोति विरचयति। तथा चित्राणां द्वारस्थानाम् आलेख्यानां प्रेक्षणकैतवेन दर्शनच्छलेन द्वारं प्रतीहारं किमपि किञ्चित् तिर्य्यगल्पं समुद्वीक्षते प्रियागमजिज्ञासया पश्यति। किञ्च सहचरीणामालीनां भूषाणामलङ्काराणां जिगीषाया जेतुमिच्छाया युष्मद्भूषाभ्यो मद्भूषणान्युत्तमानीति प्रकटनस्य मिषाद्व्याजात् नवं प्रत्यग्रम् अधृतपूर्वम् आभरणं भूषणं गृह्णाति धारयति। इत्थममुना प्रकारेण पद्मदृशो नलिनेक्षणायाः चरितमाचरणं प्रतीत्यावगत्य स्मरो मनोजः स्मेराननः स्वप्रभुत्वावरलब्ध्या नायिकाया विचित्रवञ्चनकौशलदर्शनाद्वा विहसितमुख इव अभूदित्यर्थः।

तथा च 'शिल्पं कर्म कलादिकम्' इत्यमरः, 'सौगन्धिकन्तु कल्हारम्' इत्यमरमाला च।

अत्र कल्हारत्वं सद्यः सायं विकासितया सौरभाधिक्येन सुरतात्युपयोगिताम्, तत्स्रग्गुम्फन-नवभूषणधारणे भाविक्रीडासामग्रीसम्पादनलक्षणं वासकसज्जात्वम्, तयोर्द्वारेक्षणस्य च व्याजेन विधानम् अपत्रपामौत्सुक्यदायकं कामं च; तिर्यग्गतौ पुनर्मध्यात्वम्; आभरणपदोत्तरैकवचनार्थाविवक्षा भूषाभूयस्त्वम्, तत् प्रियानुरागाधिक्यम्; स्मरस्य

स्मेरमुखत्वोत्प्रेक्षा स्वाभीष्टलाभजहर्षं तद्दर्शनाज्ञानजविस्मयं वा प्रकाशयति। कैतवापह्नुतिवृत्त्यनुप्रासयोः संसृष्टिरलङ्कारश्च ॥ ६५ ॥

प्रगल्भां तामुदाहर्तुमुपक्रमते—

प्रगल्भा वासकसज्जा यथा।

तच्चरित्रं काचिद्वदति—

कृतं वपुषि भूषणं चिकुरधोरणी धूपिता
कृता शयनसन्निधौ क्रमुकवीटिकासम्भृतिः।
अकारि हरिणीदृशा भवनमेत्य देहत्विषा
स्फुरत्कनककेतकीकुसुमकान्तिभिर्दुर्दिनम् ॥ ६६ ॥

हरिणीदृशा मृगेक्षणया वपुषि तनौ भूषणमलङ्करणं कृतं रचितम्। तथा चिकुराणां धोरणी परम्परा धूपिता सुरभिधूमेन वासिता। किञ्च शयनसन्निधौ सुरतशय्याऽन्तिके क्रमुकाणि पूगीफलानि च वीटिकास्ताम्बूलानि च तेषां सम्भृतिः सङ्कलना कृता। अपि च भवनं भोगावासम् एत्यागत्य देहस्य त्विषा द्युत्या वस्तुतः करणभूतया स्फुरन्त्य उल्लसन्त्यश्च ताः कनककेतकीकुसुमानां पीतकककचच्छदपुष्पाणां कान्तयो भासस्ताभिः करणतयाऽध्यस्ताभिः दुर्दिनं रात्रावपि प्रियागमनसौकर्याय मेघाच्छन्नदिनवत्प्रकाशः, यद्वा केतकीकुसुमसत्त्वेन प्रावृट्प्रवृत्तिद्योतनान्मेघाच्छन्नमहः, यद्वा निषिद्धं कष्टं वा दिनम् ईषत्पीतप्रकाशमात्रं वाऽकारि व्यधायीत्यर्थः।

तथा च 'धोरणी तु परम्परा' इति जटाधरः, 'वीटी सुसज्जितं ताम्बूलम्' इति शब्दकल्पद्रुमश्च।

इह भूषणादिसुरतसामग्रीसज्जं कृत्या वासकसज्जात्वम्, तत्र त्रपाव्यतिरेकेण प्रागल्भ्यम्, आगत्या प्राग्भवनतो निर्गमः, तेन प्रियमार्गेक्षणम्, तेन तु तदेव; भवने प्रकाशकरणेन कान्त्यतिरेकः; दुर्दिनपदेन कष्टयापनावता, तयोर्द्दीपनत्वं च प्रतीयते। साहित्याविवक्षणात्परोक्ताऽपि सहोक्तिस्त्यक्ता, किन्त्वतिशयोक्तिरेवालङ्कारश्च ॥ ६६ ॥

तच्चेष्टान्यतम-मनोरथद्वारा तामुदाहर्तुं व्याहरति—

मनोरथो यथा ।

अन्यदीयचेष्टापृथगनुदाहरणेऽपि विच्छित्तिविशेषशालितयाऽस्योपन्यासमुत्पश्यामः ।

रिरंसुः काचिद्विचारयति—

आवयोरङ्गयोर्द्वैते भूयो विरहविप्लवः ॥

अद्वैते च स्मितस्फीतं न स्यादन्योऽन्यवीक्षणम् ॥६७॥

आवयोर्मम प्रियस्य च अङ्गयोरवयवयोः द्वैते भेदे सति भूयः पुनः भूयान् विपुलो वा विरहविप्लवो वियोगोपद्रवः स्यात् । तथा अद्वैतेऽभेदे च पुनः स्मितेन मिथोऽनुरागातिशयजातेन ईषद्धासेन स्फीतमुत्कृष्टं वृद्धं वा अन्योऽन्यवीक्षणं परस्परविलोकनं न स्यादित्यर्थः ।

एवञ्चार्धनारीश्वरवद्भेदाभेदोऽस्त्वित्यभिसन्धिः । पद्यमिदं वक्त्र्या भेदाभेदप्राप्तिमनोरथं सकामुकत्वं तत्प्रौढिं चावगमयति ।

औपम्यभित्तिकत्वाभावात् संशयालङ्कारः परोक्तो न युक्तः परन्तु परिकरानुप्राससंसृष्टिरलङ्कारश्च ॥ ६७ ॥

परकीयां तामुदाहर्तुमुपन्यस्यति—

परकीया वासकसज्जा यथा ।

तद्व्यवसायं काऽपि विस्मिता वक्ति—

श्वश्रूं स्वापयति च्छलेन च तिरोधत्ते प्रदीपाङ्कुरं

धत्ते सौधकपोतपोतनिनदैः साङ्केतिकं चेष्टितम् ।

शश्वत्पार्श्वविवर्तिताङ्गलतिकं लोलत्कपोलद्युति

क्वापि क्वापि कराम्बुजं प्रियधिया तल्पान्तिके न्यस्यति ॥६८॥

काऽपि श्वश्रूं भर्तृमातरं छलेन प्रत्यूषभाव्युत्सवदर्शनार्थस्वपितृगृहगमनव्यपदेशेन चरणसंवाहनेन वा व्याजेन स्वापयति शाययति । च तथा प्रदीपस्य गृहमणेः अङ्कुरं डिम्भं छलेन नेत्रसन्तापकत्वदोषोक्तिकपटेन तिरोधत्ते भित्त्युलूखलाद्यन्तरितं करोति । किं च सौधकपोतपोतानां प्रासादपारावतशिशूनां निनदैः हुंकाररवैः साङ्केतिकं

सङ्केतसम्बन्धि चेष्टितं स्वसान्निध्यप्रियाह्वानादिसूचकं व्यापारं धत्ते धारयति । अपि च शश्वत्पुनः पुनः पार्श्वयोः कक्षाधःप्रदेशयोः विवर्तिता शय्यापार्श्वद्वये प्रियान्वेषणेन विवलिता अङ्गलतिका गात्रवल्ली यस्यां क्रियायाम् एवं लोलन्ती भूयो विवलनैः चलन्ती कपोलयोर्ध्वं-तिर्यस्यां क्रियायाम् तद्यथा स्यात्तथा तल्पान्तिके शय्यासन्निधौ क्वापि क्वापि क्वचित् क्वचित् प्रदेशे प्रियस्य उपपतेः धिया तमसि निलीय स्थितः स्यादिति सम्भावनया करं न्यस्यति शब्दभीत्या शनैः आरोपयतीत्यर्थः ।

अत्राङ्कुरपदं प्रदीपस्याल्पप्रकाशम्, तादृशस्यापि दीपस्य तिरोधानं प्रच्छन्नकामुकसङ्गमसौकर्यम्, तदस्याः परोढात्वम्, सा तु प्राग्वत्; केलिसामग्रीसङ्कलना वासकसज्जात्वम्; साङ्केतिकशब्दविधानं प्रियान्वेषणस्य निगूढताम्, सा तु प्राग्वत्; कपोलद्युतिस्फीतत्व झटिति प्रियमिलनसम्भावनाजन्यानन्दम्; करन्यासभूयस्त्वमौत्सुक्यं च द्योतयति । यमकानुप्राससंसृष्टरूपकालङ्कारश्च ॥ ६८ ॥

सामान्यां तामुदाहर्तुमाचष्टे—

सामान्यवनिता वासकसज्जा यथा ।

तन्मनोरथं काऽपि कथयति—

चोलं नीलनिचोलकर्षणविधौ चूडामणिं चुम्बने
याचिष्ये कुचयोः करार्पणविधौ काञ्चीं पुनः काञ्चनीम् ।
इत्थं चन्दनचर्चितैर्मृगमदैरङ्गानि संस्कुर्वती
तत्किं यन्न मनोरथं वितनुते वारेषु वाराङ्गना ॥ ६९ ॥

नीलनिचोलस्य कृष्णोत्तरच्छदशाटकस्य कर्षणविधौ कामुककृते समाकर्षणे चोलं कूर्पासकं याचिष्येऽर्थयिष्ये । तथा चुम्बने चूडामणि शिरोरत्नं याचिष्ये । पुनः किञ्च कुचयोः करार्पणविधौ स्तनयोः परामर्शे काञ्चनीं हैमीं काञ्चीं रशनां याचिष्ये । इत्थमेवं चन्दनचर्चितैर्मलयजमिश्रितैः मृगमदैः कस्तूरिकाभिः अङ्गानि गात्राणि संस्कुर्वती शोधयन्ती वासयन्ती वाराङ्गना गणिका वारेषु कामुकमिलननिर्णीतावसरेषु यद्वस्तु मनोरथम् इच्छाविषयीकृतम्, यद्वा, यद् यस्मै यद्विष-

यकं मनोरथम् इच्छां न वितनुते नैव कुरुते, तत् किं वस्तु न किञ्चिदित्यर्थः ।

तथा च 'निचोलः प्रच्छदपटो निचुलश्चोत्तरच्छदः' इति हैमः, 'चोलः कूर्पासके' इति मेदिनी, 'चूडामणिः शिरोरत्नम्' इत्यमरः, 'मृगनाभिर्मृगमदो मृगः कस्तूरिकाऽपि च' इति माधवश्च ।

इह मनोरथपदस्येच्छाविषये लक्षणा मत्वर्थीयो ऽज्वा । यदित्यस्य पक्षेऽव्ययत्वम् । अङ्गादिवासनेन कामुकचेतसो झटिति वशीकृतियोग्यता, तथा चातुरी; यियाचिषितवस्तूपादानेन लोलुपत्वं च द्योत्यते । अनुप्रासोऽलङ्कारश्च ॥ ६६ ॥

अथ स्वाधीनपतिकां निरूपयन् लक्षयति—

सदा साऽऽकूताज्ञाकर–प्रियतमा स्वाधीनपतिका ।

* साकूताज्ञाकरोऽभिप्रायानुरूपादेशपालकः प्रियतमो यस्याः सा स्वाधीनपतिका । तदुक्तं भोजराजेन—

स्वाधीनपतिका सा तु यस्याः पार्श्वं न मुञ्चति ।
प्रियश्चित्ररतक्रीडासुखास्वादेन लोलुपः ॥ इति ।

निष्कर्षमाह—

निरन्तराज्ञाकरप्रियत्वमित्यर्थः ॥

एवञ्च सामान्यलक्षणे स्वाभिप्रायानुरूपाज्ञापालनपरत्व-स्वेतरनायिकाननुरक्तत्वाभ्यां नायिकाविशिष्टप्रियवत्त्वं प्रवेश्य तत्त्वमवगन्तव्यम् ।

सौन्दर्यगर्विताया भेदग्रहाय चेष्टा निर्दिशति—

अस्याश्चेष्टा वनविहारादि-मदनमहोत्सव-
मदा–हङ्कार–मनोरथावाप्तिप्रभृतयः ।

आदिपदेन जलविहारप्रमुखा ग्राह्याः । मदनमहोत्सवः प्रियवशीभावस्थैर्याय कामपूजोत्सवः । तथा च रसार्णवे—

'अस्यास्तु चेष्टा कथिता स्मरपूजामहोत्सवः' इति ।

अहङ्कारपदपर्य्यायत्वेन मदपदस्यार्थान्तरं कथयति—

मदो हर्षोत्कर्षः ।

---

* 'स्यादाकूतमभिप्रायः' इति हेमचन्द्रः ।

हर्षार्थकोऽपि हि माद्यतिः। अहङ्कार आत्मनि प्रियवशीकरणौपयिकगुणसद्भावाभिमानः।

मुग्धस्वाधीनपतिकामुदाहर्तुमाख्याति—

मुग्धा स्वाधीनपतिका यथा।

सा काचन सखीं ब्रूते—

मध्ये न कृशिमा स्तने न गरिमा देहे न वा कान्तिमा
श्रोणौ न प्रथिमा गतौ न जडिमा नेत्रे न वा वक्रिमा।
लास्ये न द्रढिमा न वाचि पटिमा हास्ये न वा स्फीतिमा
प्राणेशस्य तथापि मज्जति मनो मय्येव किं कारणम् ॥ ७० ॥

हे सहचरि! यद्यपि मे मध्येऽवलग्ने कृशिमा नववयस्सन्धावाकृतिपरिवर्तनाभावात् कार्श्यं न अस्ति। तथा स्तने गरिमा गौरवं पीनता न अस्ति। तथा देहे कान्तिमा दीप्तिः लावण्योत्कर्षः वा पुनः न अस्ति। तथा श्रोणौ नितम्बे प्रथिमा पृथुलत्वं न अस्ति। तथा गतौ गमने जडिमा स्तैमित्यं न अस्ति। तथा नेत्रे वक्रिमा कौटिल्यं वा न अस्ति। तथा लास्ये नृत्ये द्रढिमा दार्ढ्यम् अभ्यासप्रकर्षः न अस्ति। तथा वाचि वचने पटिमा वैदग्धी न अस्ति। तथा हास्ये स्फीतिमा व्यक्तता वृद्धिर्वा न अस्ति। तथापि प्राणेशस्य प्राणनाथस्य मनश्चेतः मयि एव नत्वन्यत्र यत् मज्जति लीयते; तदत्र किं कारणं को हेतुः इति न वेद्मि तद् ब्रूहि वा इत्यर्थः।

गुणातिरेकेणैव वशीभूतोऽस्ति मे प्रेयानिति भावः।

तथा च 'मध्योऽवलग्नम्' इति हैमः, 'नितम्बः श्रोणी च' इति धनञ्जयः, 'लास्यं नृत्यञ्च नर्तनम्', 'स्फातिर्वृद्धौ' इत्यमरश्च।

अत्र कान्तस्फीतशब्दाभ्याम् 'दशनकोटिविकासवङ्किमा' इत्यादिप्राचीनप्रयोगगौरवरक्षार्थं पृथ्वादेर्दृढादेर्वाऽऽकृतिगणत्वस्वीकारेणेमनिचः सिद्धिः।

यत्तु वक्रिमेत्यत्रापि तस्य चिन्त्यत्वमन्यैरुक्तम्, तद् दृढादौ वक्रशब्दपाठानवबोधविजृम्भितमेव।

मध्यादीनां कृशिमादिविरहः स्वप्रयोजकतारुण्यपूर्णताभावम्; तथापि तथा प्राणेशमनोवशीकारः किमपि कामनीयकम्; मनसो मज्जनं पुनर्बहिरनिर्गमम्, स तदेव, तदुक्तिर्गुणातिरेकाभिमानम्, स पुनः स्वाधीनपतिकात्वं चावसाययति।

बीजानुल्लेखेऽपि मनोमज्जनोल्लेखाद्विभावनाऽलङ्कारश्च॥ ७०॥

मध्यां तामुदाहर्तुमभिधत्ते—

मध्या स्वाधीनपतिका यथा।

काचिदालीं कथयति—

यदपि रतिमहोत्सवे नकारो
यदपि करेण च नीविधारणानि।
प्रियसखि! पतिरेष पार्श्वदेशं
तदपि न मुञ्चति तत्किमाचरामि॥ ७१॥

हे प्रियसखि! यदपि यद्यपि रतिमहोत्सवे निधुवनातुलमहे पत्या प्रारिप्सिते मया नकारः निषेधार्थकः नशब्दः उच्चार्यते। च तथा यदपि करेण हस्तेन नीविधारणानि वसनविमोचनावसरे जघनवासोग्रन्थिग्रहणानि मया क्रियन्ते, तदपि तथापि एवं तदपराधविधानेऽपि गुणलुब्धः एषः त्वयाऽपि दृश्यमानः मम पतिर्भर्ता पार्श्वदेशमुभयतः सन्निकृष्टस्थलम् अङ्कलग्नतां यत् न मुञ्चति न त्यजति, तत् किमाचरामि किं विदधामीत्यर्थः।

तदीहितविरोधेनापराद्धोऽपि गुणलोभाद्वशीभूत एव मे प्रिय इत्याशयः।

तथा च 'करो नभोंऽशुहस्तेषु' इत्यजयः, 'नीविं ग्रन्थिं विदुर्नार्या जघनस्थस्य वाससः' इति शाश्वतश्च।

इह महोत्सवत्वं निषेधानर्हताम्, सा च तद्विधानेनागसस्तीव्रत्वम्; तथापि प्रियस्य रोषाभावः गुणगौरवम्; बहुवचनं धारणानामनिवार्यताम्, सा तु प्राग्वदेव च द्योतयति। सान्निध्यत्यागहेतुसत्त्वेऽपि तदनुद्भवोक्तेर्विशेषोक्तिरलङ्कारश्च। पुष्पिताग्रा छन्दश्च॥ ७१॥

प्रौढां तामुदाहर्तुं व्याहरति—

प्रौढा स्वाधीनपतिका यथा।

नायिकान्तरवत्ते पतिस्त्वद्गुणान्न कथं प्रशंसतीति सख्या पृष्टा काचिदात्मसौभाग्यं भङ्ग्या वर्णयति—

वक्त्रस्याधरपल्लवस्य वचसो हास्यस्य लास्यस्य वा
धन्यानामरविन्दसुन्दरदृशां कान्तस्तनोति स्तुतिम्।
स्वप्नेनापि न गच्छति श्रुतिपथं चेतःपथं दृक्पथं
काऽप्यन्या दयितस्य मे सखि! कथं तस्यास्तु भेदग्रहः॥७२॥

हे सखि! धन्यानाम् प्रियेण प्रशस्यमानत्वात् पुण्यवतीनां वस्तुतस्तत्प्रियस्य भेदग्रहादधन्यानाम् अरविन्दसुन्दरदृशां नलिनललामलोचनानाम् अपराङ्गनानां कान्तः वक्त्रस्य मुखस्य अधरपल्लवस्यौष्ठकिसलयस्य वचसः हास्यस्य वा तथा लास्यस्य नृत्यस्य स्तुतिं प्रशंसां तनोत्याचरति। मे मम दयितस्य तु यदा स्वप्नेन निद्रयाऽपि किमु जागृत्या काऽपि मदन्या रमणी श्रुतिपथं श्रोत्रपदवीं चेतःपथं स्वान्तसरणिं दृक्पथमीक्षणाध्वानं न गच्छति श्रुता भाविता दृष्टा वा न भवति। तदा तस्य भेदग्रहः अन्याभ्यो मे व्यतिरेकबोधः कथम् अस्तु न सम्भवतीत्यर्थः। अर्थान्तरन्तु न सच्चेतोमनोहरम्।

भेदग्रह एवैकस्याः कस्याश्चित्प्रशंसा सम्भवतीत्यभिप्रायः।

अत्रान्यासां प्रियस्य स्तावकत्वेन भेदग्रहः, तेन रमण्यन्तरभावनावत्त्वम्, तावता तासां सर्वथा स्वाधीनपतिकत्वाभावद्वाराऽधन्यात्वम्, तत्सत्त्वेनात्मनो धन्यात्वमिति व्यतिरेकश्च व्यज्यते।

श्रुत्याद्यगोचरस्य वस्तुन इतरवैलक्षण्यानवधारणमर्थादेवापतितमिति 'दण्डापूपिकयाऽन्यार्थागमोऽर्थापत्तिरिष्यते' इति दर्पणलक्षितेऽर्थापत्त्यलङ्कारश्च॥ ७२॥

परकीयां तामुदाहर्तुमाख्याति—

परकीया स्वाधीनपतिका यथा।

पतिरिह वल्लभः। तद्वशीकृतिहृता काऽपि सहचरीमाचष्टे—

स्वीयाः सन्ति गृहे गृहे मृगदृशो यासां विलासक्वणत्-
काञ्चीकुण्डलहेमकङ्कणझणत्कारो न विश्राम्यति ।
को हेतुः ? सखि ! कानने पुरपथे सौधे सखीसन्निधौ
भ्राम्यन्ती मम वल्लभस्य परितो दृष्टिर्न मां मुञ्चति ॥ ७३ ॥

हे सखि ! यद्यपि ताः स्वीयाः स्वकीयाः मृगदृशो हरिणलोचनाः गृहे गृहे प्रतिगेहं सन्ति । यासां स्वीयानां विलासेन विभ्रमविशेषेण क्वणतां शिञ्जानानां काञ्चीकुण्डलहेमकङ्कणानां रशनाकर्णभूषणस्वर्णवलयानां झणत्कारः शब्दविशेषः न विश्राम्यति न विरमति सतत भवत्येव। तथापि मम वल्लभस्य कान्तस्य दृष्टिः मामीक्षितुं परितोऽभितः भ्राम्यन्ती सञ्चरन्ती कानने पुरपथे नगरमार्गे सौधे राजसदने सखीनां सन्निधो निकटे अपि यत् मां न मुञ्चति नो जहाति, तत्र को हेतुः किं निमित्तम् ? तन्न जाने तत्कथय वा इत्यर्थः ।

स्वीया विलक्षणा गुणा मयि सन्तीति कथनाशयः ।

तथा च 'हेम चाष्टापदं स्वर्णम्' इति धनञ्जयः, 'सौधोऽस्त्री राजसदनम्' इति क्षीरस्वामी च ।

इह गृहे गृहे इति वप्सायां द्वित्वम्, सा स्वीयात्वं च तत्प्राप्तायासाभावम् ; तासां मृगदृक्पदद्योत्ययौवनभूषादिमत्ता रमणीयताम् ; तथापि ता विहाय कान्तस्य स्वस्मिन्ननुरागो निस्सीमगुणगौरवम्, तदुक्तिर्यथापूर्वम् ; काननत्वं भीषणताम् ; पुरपथत्वं बहुलजनाकीर्णताम् ; सौधत्वमुच्चैस्त्वाद्दृष्टेरारोहणानर्हतां रक्षिलक्षावृतत्वेन भीमतां च; सखीसान्निध्यमपत्रपौचिताम् ; काननादौ दृष्टेर्भ्रमणं निर्भीकत्व-निस्त्रपत्व-साहसित्वोन्मत्तत्वानि; तानि पुनरासक्त्यतिरेकम्, स च तद्गवौचित्यं चावेदयति ।

भ्राम्यन्त्या ममेति गोपालभट्टाङ्गीकृतपाठस्तु भ्रान्तेर्नायिकावृत्तित्वोक्तौ तादृशचमत्कारविरहादुपेक्षितः । औपम्यभित्तिकत्वाभावान्न परोक्तः संशयः, विच्छित्त्यजनकत्वान्न वाऽन्योक्ता विभावना । किन्तु प्रतीयमानव्यतिरेकोऽनुप्रासेन संसृज्यते च ॥ ७३ ॥

सामान्यां तामुदाहर्तुमाह—

सामान्यवनिता स्वाधीनपतिका यथा।

पतिरिह वैशिकः। काचिद्वेश्या वयस्यां वक्ति—

सन्त्येव प्रतिमन्दिरं युवतयो यासां सुधासागर-
स्रोतःस्यूतसरोजसुन्दरचमत्कारा दृशो विभ्रमाः।
चित्रं किन्तु विचित्रमन्मथकलावैशद्यहेतोः पुन-
र्वित्तं चित्तहरं प्रयच्छति युवा मय्येव किं कारणम्॥ ७४॥

हे सखि! स्वीयाः परकीयाश्च ताः युवतयः प्रतिमन्दिरं गृहे गृहे यद्यपि सन्त्येव न त्वासादनीयाः। यासां युवतीनां सुधासागरस्य पीयूषपयोधेः सम्बन्धिनि स्रोतसि नदीप्रवाहे स्यूतं सम्बद्धं यत्सरोजं कमलं तद्वत्सुन्दरा रुचिराः दृशो दृष्टेः विभ्रमा विलासा विचित्राणां विलक्षणानां मन्मथकलानां कामकौशलानां वैशद्यं स्फुटत्वम् उत्कर्ष एव हेतुः प्रयोजनं तस्मात् समुल्लसन्ति। किन्तु तथापि युवा तरुणः चित्तहरं मनोहरं वित्तं धनं यत् मयि प्रयच्छति वितरति एव न त्वन्यैर्वारितो निवर्तते, तत् चित्रमद्भुतम्, तत्र किं कारणम्? तन्न वेद्मि इत्यर्थः। तात्पर्य्यं पूर्ववदेव। तथा च 'विशदं स्फुटम्' इति यादवः।

अत्र सीव्यतेः सम्बन्धे लक्षणा। एवकारो भिन्नक्रमः। मय्येवेत्यन्वयो नोचितः, स्वीयापरकीययोर्धनहेतुकरत्यभावादेव व्यवच्छेदेन तदर्थं तदुपादानवैयर्थ्यात्। वेश्यान्तरव्यावृत्त्यर्थं तदिति चेत्? न, तस्यापि लक्ष्यत्वात्, पूर्वार्द्धस्वरसव्याघाताच्च। मन्मथकलेत्यादिना द्रव्यदानहेतोः स्वयं कथनेऽपि किं कारणमिति प्रश्नो न युक्त इत्याक्षेपस्त्वन्वयान्यथाकरणेन निरस्तः। स्वतोऽम्बुसरणरूपस्य स्रोतसः सागरेऽसम्भवेऽपि नदीसम्बन्धोपकल्पनेन तरङ्गस्रोतःपदस्य लक्षणाऽङ्गीकारेण वा परिहरणीयः। एवकारेण युवतीनां सौलभ्यम्; तत्प्रवाहसंसर्गेण दृग्विभ्रमाणां चापल्यमाह्लादकत्वं च; कामकलोल्लासकत्वेन त्वर्थापत्त्याऽङ्गसङ्गस्य विशेषतस्तत्त्वम्; द्रव्यदानमन्तरेणैव सुलभाः कामकलाकुशला युवतीर्विहाय स्वस्मिन्नासक्तवर्णनेन स्वगुणोत्कर्षः,

तदुक्त्या स्वाधीनपतिकात्वम्; युवत्वेन सकलरमणीस्पृहणीयता, तया तरुण्यन्तरमिलनसौकर्य्यम्; वित्तस्य चित्तहरत्वेनादेयता; एवशब्देन परनिवारणेऽपि द्रविणवितरणपरायणत्वम्, तेनासक्त्यतिरेकः, तावता पूर्ववत्स्वगुणोत्कर्षश्च सूच्यते।

प्रतीयमानार्थापत्तिसंसृष्टलुप्तोपमाद्वयमलङ्कारश्च ॥ ७४ ॥

अभिसारिकामन्ते निरूपयंल्लक्षयति—

स्वयमभिसरति प्रियमभिसारयति वा या साऽभिसारिका।

या कान्तसङ्गमाय सङ्केतं गच्छति, तमेव वा सङ्केतं दूत्यादिद्वाराऽऽगमयति, साऽभिसरणाभिसारणान्यतरकर्तृत्वादभिसारिका। तदुक्तम्—

या कान्ताऽभिसरेत्कान्तं सारयेद्वाऽभिसारिका। इति।

एवञ्च स्वसङ्गमोद्देश्यकसङ्केतस्थलाभिसरणकर्तृत्व-स्वकर्मकसङ्केतस्थलाभिसारणकर्तृत्वान्यतरसम्बन्धेन प्रियविशिष्टत्वमभिसारिकात्वं पर्यवसन्नम्। विशेषावगमाय चेष्टाः पृथङ् निर्दिशति—

अस्याश्चेष्टाः समयानुरूपवेषभूषण-शङ्का-प्रज्ञानैपुण्य-कपट-साहसादय इति परकीयायाः।

अस्याः परकीयाभिसारिकायाः समयानुरूपं ज्योत्स्ना तमिस्रा-दिवस-वर्षादिकालानुसारम् शुक्लकृष्णादिवेष-सरवनीरवादिभूषणधारणम्। शङ्का रहस्यभेदाद्रातङ्कः। प्रज्ञानैपुण्यमभिसारनिगूहनप्रावीण्यम्। कपटो गुरुजनादिवञ्चनम्। एताः परकीयायाश्चेष्टाः, तदभिसारप्रकाशस्य विशेषलज्जाबीजत्वात्।

स्वकीयायाः पुनर्विशेषमाह—

स्वीयायास्तु प्रकृत एव क्रमः।

स्वीयाभिसारिकायाः पुनः प्रकृतः पूर्वोक्तः पतिशुश्रूषाप्रभृतिरेव न तु तादृशवेषादिधारणम्। क्रमोऽभिसारव्यापारः।

तत्र हेतुमुपन्यस्यति—

अलक्ष्यतासम्पादकस्य श्वेताद्याभरणस्य स्वीयाभिसारिकायामसम्भवात्।

अलक्ष्यताऽज्ञेयता। न हि स्वीयायाः सङ्केतगतौ लोकैरवगतायामपि परकीयावदाक्रोशशङ्का समुदेति, तत्किमिति सा तथा निलीयाभिसरेदित्यभिसन्धिः।

अत एव ज्योत्स्नाऽभिसारिकादिभेदत्रयं परकीयामुपक्रम्यैव मूले दर्शितम्। तमिस्राभिसारिकोदाहरणश्लोकघटकस्वैरिणीपदोक्तिरप्यत्रैवानुकूला।

नन्वेवं दिवसाभिसारिकोदाहरणश्लोकघटकशुद्धान्तपदोपादानं स्वीयातावद्भेदाङ्गीकारे मानमिति चेत्?

मैवम्, शुद्धान्तेऽपि व्यभिचारप्रचुरप्रसिद्धेः परकीयात्वस्य सम्भवादिति प्राञ्चः।

अर्वाञ्चस्तु गुरुजनप्रतिबन्धेन गृहे स्थलमलब्ध्वा प्रियसङ्गतये बहिः सङ्केतं गच्छन्त्याः स्वीयाया अपि लोकलज्जापरवशतया तादृशवेषादिभिरात्मनिह्नवमुचितं चमत्कारकं च सम्मन्वानाः स्वीयावत् सामान्याया अपि तान् भेदानूरीकुर्वन्ति।

मुग्धाऽभिसारिकामुदाहर्तुमभिधत्ते—

मुग्धाऽभिसारिका यथा।

त्रपयाऽभिसरणे विलम्बमानां काचिदाचष्टे—

दूती विद्युदुपागता सहचरी रात्रिः सहस्थायिनी
दैवज्ञो दिशति स्वनेन जलदः प्रस्थानवेलां शुभाम्।
वाचं माङ्गलिकीं तनोति तिमिरस्तोमोऽपि झिल्लीरवै-
र्जातोऽयं दयिताभिसारसमयो मुग्धे विमुञ्च त्रपाम्॥७५॥

हे मुग्धे! विद्युच्चपलैव दूती सञ्चारिका उपागता आह्वानाय प्राप्ता, तथा रात्रिर्निशैव सहचरी सखी सहस्थायिनी सहाया अस्ति। किञ्च जलदो घन एव दैवज्ञो गणकः स्वनेन स्तनितेन शुभां मङ्गलकरीं योगाधियोगादिमतीं प्रस्थानवेलां यात्रासमयं दिशत्याज्ञापयति। अपि तथा तिमिरस्तोमस्तमस्समूह एव बन्धुजनः यदाऽचेतनो यदा स एवं करोति, किमुत तदा चेतन आलीजनः झिल्लीरवैर्भृङ्गारीस्वनैः

माङ्गलिकीं कल्याणप्रयोजनां वाचं 'गम्यतामर्थलाभाय क्षेमाय विजयाय च' इत्यादिगिरं तनोति पल्लवयति मुहुर्व्याहरति। एवञ्च अयं विद्यमानः दयिताभिसारसमयः प्रियसङ्केतगमनकालः जात उपस्थितः। तस्मात् त्रपां ह्रियं विमुञ्च जहीहीत्यर्थः।

अभिसर्तुं त्वर्यतां लज्जया शुभप्रस्थानवेलाऽतिक्रमो न विधीयतामित्याशयः।

तथा च 'दैवज्ञगणकावपि' इत्यमरः, 'झिल्लिका वर्षकरी भृङ्गारिका च सा' इति हैमश्च।

इह मङ्गलं प्रयोजनमस्या इति विग्रहे 'प्रयोजनम्' इति सूत्रेण ठञ्। सहचरीशब्दस्य सख्यां रूढेर्न सहस्थायिनीशब्देन पुनरुक्तिः। विद्युतो दूतीत्वारोपेण क्षणमात्रस्थायितया प्रस्थाने शीघ्रकारिता, अनाकारिता कथं गमिष्यामीत्याक्षेपसमाधिश्च; रात्रेः सहचरीत्व-सहस्थायित्वाभ्यामेकाकिन्याश्चपलया वा सह मे गमनं कथं स्यादिति वितर्कनिवृत्तिः; जलदस्य दैवज्ञत्वेनालङ्घ्यादेशता; वेलायाश्शुभत्वेनानतिक्रमणीयता, सहायाप्तावपि शुभसमयं विना कथं प्रस्थास्य इत्याशङ्काऽनवकाशश्च; दिशतीति वर्तमानार्थकतिङा तदादिष्टप्रस्थानस्य सद्योऽनुष्ठेयत्वम्; तमःस्तोमस्य शकुनशंसकत्वेन बन्धुत्वं प्रस्थानस्य झटिति विधेयता च व्यज्यते।

जनान्तरस्यापि प्रतिष्ठासोर्दूत्यागममुहूर्तादेशशुभशंसनादि प्रसिद्धमिति च्छायासमासोक्तिः। कस्यचिन्मते प्रतीयमानोत्प्रेक्षा।

विद्युदादीनां दूतीत्वाद्यारोपस्य शाब्दत्वात् तिमिरस्तोमस्य बन्धुजनत्वारोपस्य चार्थत्वादेकदेशविवर्तिरूपकमलङ्कारश्च ॥ ७५ ॥

मध्यां तामुदाहर्तुमुपन्यस्यति—

मध्याऽभिसारिका यथा।

नायकस्तां वक्ति—

भीताऽसि नैव भुजगात्पथि मद्भुजस्य
सङ्गे पुनः कमपि कम्पमुरीकरोषि।

अम्भोधरध्वनिभिरक्षुभिताऽसि तन्वि !
मद्वाचि साचिवदनाऽसि किमाचरामि ॥ ७६ ॥

हे तन्वि ! त्वं पथि मार्गे भुजगात् पदाऽभिमृष्टात् सर्पात् नैव भीता त्रस्ताऽसि । पुनः किन्तु मद्भुजस्य मम बाहोः सङ्गे संस्पर्शे कमपि विलक्षणं कम्पं वेपथुम् उरीकरोष्यभ्युपगच्छसि वहसि । तथा अम्भोधरध्वनिभिः सजलघनस्तनितैः अक्षुभिता भीत्या असञ्चलिताऽसि । किन्तु मद्वाचि मम एकस्मिन्नपि वचसि श्रुतायां साचि व्रीडेनोद्वेगेन वा तिर्यग् वदनं यस्यास्तादृशी यत् असि, तदिह त्वदावर्जनाय किमाचरामि किं विदधामि तन्न जाने इत्यर्थः ।

सर्वथा प्रतीपदर्शिन्यास्तवावर्जनं दुष्करमेवेत्याकूतम् ।
समग्रश्लोकेन बाहुभुजङ्गयोर्मेघध्वनिनायकवाचोरौपम्यम् ।

अत्र भुजगाम्भोधरध्वनिभ्यः सहजभीषणेभ्योऽप्यभीत्या नायकभुजवाग्भ्यां निसर्गप्रियाभ्यामपि भीत्या वामता; तया तदार्जवापादनाशक्यता; वदनस्य साचीकृत्या लज्जोद्वेगौ; किमा तदाराधनोपायाभावश्च प्रतीयते । किमपीति पाठेऽव्ययत्वेन सङ्गविशेषणत्वमीषदर्थत्वमतिसङ्गे कम्पातिशयौचित्यद्योतकत्वं च । अक्षुभिताऽसीति प्रसज्यप्रतिषेधनञः समासघटकत्वेन विधेयाविमर्शदोषस्तु असीति क्रियापदस्थानेऽपिशब्दसन्निवेशेन परिहार्य्यः, पर्युदासनञः समस्तत्वेऽप्यदोषात् ।

अत्र न क्षुभिताऽसीति पाठो युक्तः इति वदन्तश्छन्दोभङ्गमुपेक्षन्त । सञ्चलनार्थकात्क्षुभेर्मन्थेतरार्थं क्तः । भीतिहेतुसत्त्वेऽपि तदनुद्भवाद्विशेषोक्तिसंसृष्टा विभावनाऽलङ्कारश्च ॥ ७६ ॥

प्रौढां तामुदाहर्तुमुपक्रमते—

प्रौढाऽभिसारिका यथा ।

तस्या मन्मथमनोरथमन्तरेणैव सङ्केतागमं सम्भावयन्तं काचिद्वक्ति—

स्फुरदुरसिजभारभङ्गुराङ्गी किसलयकोमलकान्तिना पदेन ।
अथ कथय कथं सहेत गन्तुं यदि न निशासु मनोरथो रथः स्यात् ॥७७॥

अथ यदि मनोरथः प्रियसङ्गमस्य अभिलाष एव रथः स्मरसम-

रगमनोपयोगी स्यन्दनः न स्यात्, तदा स्फुरतोः समुल्लसतोः उन्नमतोः उरसिजयोः स्तनयोः भारेण भरेण गौरवेण भङ्गुराण्यवनतानि अङ्गानि यस्यास्तादृशी कामिनी किसलयस्येव कोमला रुचिरा कान्तिर्यस्य तेन। यद्वा, किसलयवत्कोमलेन मृदुना कान्तिना कान्तिमता च पदेन चरणेन निशासु यामिनीषु तत्रापि तमिस्रासु कथं केन प्रकारेण गन्तुमभिसर्तुं सहेत क्षमेत शक्ता स्यादिति कथय ब्रूहीत्यर्थः।

मन्मथमनोरथ एव बलात्तामानयतीत्यभिप्रायः।

तथा च 'युद्धार्थे शताङ्गः स्यन्दनो रथः' इत्यमरः, 'छदं दलम्। नवे तस्मिन् किसलयम्' इति हैमः, 'भरोऽतिशयभारयोः' इत्यनेकार्थकोशश्च।

इहाथेत्यनेन प्रश्नद्वारा तदर्थस्यासम्भाव्यता; मनोरथस्य रथत्वोक्त्या शीघ्रगामित्वानायासलभ्यत्वे; वक्षोजभारेणाङ्गानां भङ्गुरतया पदस्य नवपल्लवकोमलतया च कामनीयकम्; रथं विना गन्तुमयोग्यता च; निशात्वेन बहुत्वेन च तमोबाहुल्येनोच्चावचप्रदेशानां ज्ञातुमशक्यतया गमनायोग्यता च द्योत्यते। कौमुद्युक्तं कान्तिपदाधिक्यं भावत्कान्तकान्तशब्दादिनः कल्पनया परिहृतम्। 'कन्यायाः कलधौतकोमलरुचेः' इति प्राचीनोक्तिगौरवात्कोमलपदस्य रुचिरार्थताऽवसीयते।

यमकानुप्राससंसृष्टा स्तनभराक्रान्ताया मृदुपदाया निशासु गमनान्यथाऽनुपपत्त्या मनोरथस्य रथत्वकल्पनादर्थापत्तिरलङ्कारः। पुष्पिताग्रा छन्दश्च ॥ ७७ ॥

परकीयां तामुदाहर्तुमाचष्टे—

परकीयाऽभिसारिका यथा।

कथमिदानीं कुसमयेऽभिसरिष्यसीति पृच्छन्तीं सखीं नायिका, तामेव तत्कथयन्तीं सखी वा वदति—

रभसादभिसर्तुमुद्यतानां
वनितानां सखि! वारिदो विवस्वान्।
रजनी दिवसोऽन्धकारमर्चि-
र्विपिनं वेश्म विमार्ग एव मार्गः ॥ ७८ ॥

हे सखि ! रभसात् कान्तमिलनोत्सुक्यजात् वेगात् हर्षाद्वा अभिसर्तुं सङ्केतं गन्तुम् उद्यतानामुद्युक्तानां वनितानामतिरक्तयोषितां वारिदो जलद एव विवस्वान् सूर्यः भवति। तथा रजनी निशा एव दिवसो वासरः भवति। तथा अन्धकारं तम एव अर्चिरग्निर्ज्योतिः भवति। तथा विपिनं काननमेव वेश्म वासः सदनं भवति। तथा विमार्गः कदध्वा एव मार्गः पन्थाः भवति इत्यर्थः।

रहस्यभेदाद् भृशं बिभ्यतीनामभिसारिकाणामुचित एवायमवसर इतरजनभीतिराहित्यादित्याकूतम्।

तथा च 'रभसो हर्षवेगयोः' इति मेदिनी, 'वनिता जनितात्यर्थानुरागायां च योषिति' इति विश्वः, 'अन्धकारोऽस्त्रियाम्' इत्यमरः, 'सदनं सद्म भवनं धिष्ण्यं वेश्माथ मन्दिरम्' इति धनञ्जयश्च।

अत्राभिसरणोद्यमस्य रभसजन्यत्वेनाविवेकारब्धत्वम, तेन तत्कर्या आसक्तिविशेषः; वारिदत्वेन मार्गपङ्किलीकरणशीलम्; विवस्वत्त्वेन तच्छोषकत्वम्; रजनीत्वेन सञ्चरणानवसरत्वम्; दिवसत्वेन तत्प्रतिकूलता; अन्धकारत्वेन दृष्टिशक्तिहारकतया गतिरोधकत्वम्; अर्चिष्ट्वेन तद्विरुद्धकार्यकारिता; विपिनत्वेन भीषणतया स्थित्ययोग्यता; वेश्मत्वेन तदन्यथाभावः, विमार्गत्वेनापरिचितत्वमगम्यता च; मार्गत्वेन तत्प्रतीपम्; इतरवैलक्षण्येन गमनस्य गोप्यता, तया रतेः, तया तु परकीयात्वं च वस्तु व्यज्यते। विरोधस्यापातिकप्रतीतेर्विरोधाभासोऽलङ्कारः। मालभारिणी च्छन्दश्च ॥ ७८ ॥

एतत्किलाभिसरणोदाहरणमेव, अभिसारणस्य तु—

> यावन्मद्यमदप्रमादविवशः सुप्तो जनोऽन्तःपुरे
> यावच्चैष न मुच्यते जलमुचा वैरीव तारापतिः।
> यावद् द्वारमिदं न रक्षकजनैरास्थीयते सम्प्रति
> क्षिप्रं तावदसो स्मरामयवतां वैद्यः समासाद्यताम् ॥

इति प्रागुक्तमेवोदाहरणम्।

अथ यथापूर्वं परकीयाभिसारिकामपि सामान्येनोदाहृत्य तस्याः—

> संस्कृतात्प्राकृतं मिष्टं ततोऽपभ्रंशभाषणम्।
> ततः प्रियतरा वेश्या सर्वतश्चाभिसारिका ॥

इति भरतोक्त्याऽतिशयानन्ददानान्नायिकासु श्रेयस्त्वसूचनाद्विशेषो-दाहरणमदत्त्वाऽपरितुष्यन् कविर्ज्योत्स्नाभिसारिकामुदाहर्तुं व्याहरति—

ज्योत्स्नाऽभिसारिका यथा ।

काचिद्विस्मिता परां ब्रवीति—

चन्द्रोदये चन्दनमङ्गकेषु विहस्य विन्यस्य विनिर्गतायाः ।

मनो निहन्तुं मदनोऽपि बाणान् करेण कौन्दान् बिभराम्बभूव ॥

चन्द्रस्य सुधांशोः उदये अङ्गेषु गात्रेषु चन्दनं पाटीरद्रवं विन्यस्य विलिप्य तथा विहस्य विशेषेण स्मित्वा विनिर्गतायाः अभिसृतायाः मनो मानसं निहन्तुं वेद्धुम् तद्गर्वमसहमानः मदनः कामोऽपि कौन्दान् माघ्यकुसुमस्वरूपान् बाणानिषून् करेण बिभराम्बभूव इव दधारेत्यर्थः ।

कामोद्दीपककुन्दविकासेनोपकृता वर्धितोत्कण्ठा च साऽभिसृतेति तात्पर्यम् । तथा च 'कुन्दो माघ्येऽस्त्री' इति मेदिनी ।

इह णिचोऽनुपलब्धेर्निहतार्थत्वाच्च हन्तेर्न प्रापणे शक्तिः किन्तु हिंसायामेव । चन्द्रपदमाह्लादजननद्वाराऽभिसरणोपयोगित्वम्; कप्रत्ययोऽङ्गानामनुकम्प्यताम्, सा तेषां वियोगतानवम्, तच्चाभिसरणौचित्यं विरहपाण्डिम्नाऽलक्ष्यत्वं च; चन्द्रोदयेऽपि चन्दनलेपो निकामालक्ष्यतासम्पादनम्, तदभिसरणगूढतामुखेन परकीयात्वम्; विन्यासश्चन्दनस्य सुविधानं मध्ये कृत्वा लोकैर्झटिति परिचेतुमशक्यतायाः करणम्, तत्पूर्ववदेव; हासः पूर्ववत् सम्यगलक्ष्यतासम्पादनमन्यं प्रमदं मदं वा; मनसो वेधः तस्यवेन्द्रियराजत्वेन सर्वापराधिताम्; कौन्दबाणधारणं श्वेतपरिच्छदायाः श्वेतेनैव बाणेन वेधे सर्वथौचित्यं च सूचयति । प्रतीयमानोत्प्रेक्षाऽलङ्कारश्च ॥ ७९ ॥

तमिस्राभिसारिकामुदाहर्तुमाख्याति—

तमिस्राऽभिसारिका यथा ।

कश्चिदाह—

नाम्बुजैर्न कुमुदैरुपमेयं स्वैरिणीजनविलोचनयुग्मम् ।

नोदये दिनकरस्य नवेन्दोः केवले तमसि तस्य विकासः ॥८०॥

स्वैरिणीजनस्याभिसारिकागणस्य विलोचनयुग्मं नयनद्वयम् अम्बुजैः सूर्योदये विकासिभिः कमलैः उपमेयमुपमातुं तुलयितुं योग्यं न अस्ति। वा पुनः कुमुदैः चन्द्रोदये विकासिभिः कैरवैः उपमेयं न भवति, यतः तस्य तन्नेत्रयुगस्य दिनकरस्य भानोः उदये उद्गमे विकासः स्फुटता न भवति। वा पुनः इन्दोश्शशिनः उदये विकासः न भवति, किन्तु केवलेऽवधारिते तमसि तिमिरमात्रे तस्य विकासो भवति इत्यर्थः।

कृष्णाभिसारिकाऽन्धतमसावृतमपि मार्गं सुपश्यन्तो सुखं गच्छतीत्यद्भुतमिति भावः। तथा च 'केवलश्चावधारितः' इति शाश्वतः।

अत्र नञ्द्वयाभावे पृथगभावयोरवगमो न स्यात्। एकतरोपादाने तु परत्रान्वय एव दुर्लभो भवेदित्येषैव नागेशोक्तनञ्द्वयोपादानप्रयोजनचिन्तायाः प्रत्युक्तिः।

व्यङ्ग्यमविशेषं भावकुक्षौ निक्षिप्य दर्शितम्।
स्वैरिणीदृग्द्वयं कमलकुमुदान्यतरसादृश्याभाववत्।

सूर्यचन्द्रान्यतरोदयेऽविकासित्वे सति तमोमात्रे विकासित्वादित्यनुमितिरेवालङ्कारः, प्रतिज्ञाहेत्वोः स्पष्टमुपात्तत्वाच्चमत्कारित्वाच्च। कौमुदीकृदुक्तो व्यतिरेकस्तु सादृश्यनिषेधस्य शाब्दत्वेन नोचितः।

'स्वागता रनभगैर्गुरुणा च' इति केदारलक्षितस्वागता च्छन्दश्च॥

दिवसाभिसारिकामुदाहर्तुमाह—

दिवसाभिसारिका यथा।

कश्चिद्वदति—

पल्लीनामधिपस्य पङ्कजदृशां पर्वोत्सवामन्त्रणे
जाते सद्मजना मिथःकृतमहोत्साहं पुरः प्रस्थिताः।
सव्याजं स्थितयोर्विहस्य गतयोः शुद्धान्तमत्रान्तरे
यूनोः स्विन्नकपोलयोर्विजयते कोऽप्येष कण्ठग्रहः॥ ८१॥

पल्लीनामल्पग्रामीणाम् अधिपस्य प्रभोः पङ्कजदृशां नलिनेक्षणानां योषितां पर्वोत्सवाय तिथिविशेषप्रयुक्तोद्भवाय आमन्त्रणे निमन्त्रणे आह्वाने जाते समागते सति सद्मजना गृहवासिनो मनुष्याः मिथोऽ-

स्योऽन्यं कृतः महान् उत्साहोऽध्यवसायो यत्र तद्यथा स्यात्तथा पुरोऽग्रे प्रस्थिताः पल्लीपतिगृहं प्रयाताः यदाऽभूवन् अत्रान्तरे एतन्मध्ये सव्याजं सच्छलं मृषैव किञ्चित्कारणमपदिश्य स्वगृह एव स्थितयोः न तु तैः सह गतयोः विहस्य अहो एते वञ्चिता एवेतीप्रसिद्धिजन्यहर्षाद्रतेर्वा स्मित्वा शुद्धान्तमन्तःपुरं रहः कक्षान्तरं वा गतयोः प्राप्तयोः स्विन्नकपोलयोः मिथः स्पर्शेन सात्त्विकभावोदयात् सघर्मगण्डयोः यूनोस्तरुण्यास्तरुणस्य च कोऽप्येष विशिष्य शंसितुमशक्यः आनन्दाधिक्यदानात् सर्वातिशायी वा बुद्धिविषयः कण्ठस्य मिथो ग्रह आश्लेषः विजयते सर्वोत्कर्षेण वर्तत इत्यर्थः ।

न विना विप्रलम्भेन शृङ्गारः पुष्टिमश्नुते ।
कषायिते हि वस्त्रादौ भूयान् रागो विवर्धते ॥

इत्याम्नानाद्भ सदा लोकलज्जया विश्लिष्टयोराकस्मिकाश्लेषो निरवधिरभूदिति भावः ।

तथा च 'पल्ल्यल्पग्रामकुहिन्योः' इति मेदिनी, 'तिथिभेदे क्षणे पर्व' इत्यमरः, 'शुद्धान्तोऽन्तःपुरे राज्ञो रहः कक्षान्तरेऽपि च' इति विश्वश्च ।

इह पल्लीबहुत्वमधिपैकत्वं च प्रभावोत्कर्षम्, स च तदङ्गनामन्त्रणस्यावश्यपूरणीयतां गृहवास्यशेषजनगमनौचितीञ्च; सन्नजनपदमाबालवृद्धगमनम्, तत्तयोः रहसि विहारोपपत्तिम्; सव्याजस्थितिर्लोकलज्जाभीति-रत्युत्कटत्वानि पुरस्कृत्य परकीयात्वम्; कण्ठग्रहस्य जयोऽवसानाभावं च सूचयति ।

दिवासम्भोगनिषेधाक्षेपस्तु परकीयाप्रकरणे न सङ्गतः, तत्र स्मृतिभ्यः सर्वथा जलाञ्जलिप्रदानात् । 'श्रुतिवृत्त्यनुप्राससहचरकाव्यलिङ्गालङ्कारश्च ॥ ८१ ॥

एवमस्या उदाहरणदर्शनादन्येऽपि भेदा ज्ञातव्याः ।

तत्र वर्षाऽभिसारिका यथा—

वातोद्धूतमुखी प्रमृष्टतिलका सालक्तरक्तांशुका
मेघानां निनदेन भीतवदना गत्वा प्रियस्यालयम् ।
देहि द्वारमितीह तेन गदितुं व्रीडेन वर्षाहता

पादौ नूपुरकर्दमप्रतिहतौ संशब्दयन्ती स्थिता ॥

स्वैरिण्यादिपदप्रयोगाच्छिष्टाम्नानाच्च परकीयायामेवैतेऽन्तर्भवन्ति। सामान्यां पुनस्तामुदाहर्तुमुपक्रमते—

सामान्यवनिताऽभिसारिका यथा ।

वेश्यामभिसरन्तीं विलोक्य कोऽप्याह—

लोलच्चोलचमत्कृति प्रविलसत्काञ्चीलताझङ्कृति
न्यञ्चत्कञ्चुकबन्धबन्धुरचलद्वक्षोजकुम्भोन्नति ।
स्फूर्जद्दीधिति विस्फुरद्गति चलच्चामीकरालङ्कृति
क्रीडाकुञ्जगृहं प्रयाति कृतिनः कस्यापि वाराङ्गना ॥ ८२ ॥

वाराङ्गना गणिका लोलतः गतिविभ्रमेण तरलीभवतः चोलस्य नामैकदेशग्रहणात् निचोलस्योत्तरच्छदस्य चमत्कृतिश्चमत्कारो यत्र तथा प्रविलसन्त्याः तदङ्गसङ्गात् अतिशोभमानायाः काञ्चीलताया मेखलवल्लयाः झङ्कृतिशिञ्जितविशेषो यत्र तथा न्यञ्चता नीचैर्गच्छता कञ्चुकबन्धेन कूर्पासकग्रन्थिविशेषेण बन्धुराऽऽनता अत एव चलन्ती साचिप्रसरन्ती वक्षोजावेव कुम्भौ घटौ ताविव वा तयोरुन्नतिरुत्सेधो यत्र तथा स्फूर्जन्ती परितोऽनुसरन्ती दीधितिः कान्तिर्यत्र तथा विस्फुरन्ती विलसन्ती गतिर्यत्र तथा चलन्त्यश्चञ्चलाः चामीकरालङ्कृतयो हेमभूषणानि च यत्र कर्मणि तद्यथा स्यात्तथा कस्याप्यतिभाग्यशालिनः कृतिनः पूर्वपुण्यजुषः क्रीडाकुञ्जगृहं केलिलतानिकेतनं वारेषु नियतावसरेषु प्रयाति गच्छतीत्यर्थः ।

महाभाग्यमन्तरेण नेदृशी कामिनी कमप्यभिसरतीति भावः।

तथा च 'न्यग्नीचम्' इति हैमः, 'बन्धुरं तून्नतानतम्' इत्यमरश्च ।

अत्र चोललोलनेन गतौ विलासः; भूषणझङ्कारेण गतौ शीघ्रताविभ्रमश्च, शैघ्र्येण कामुकसमागमौत्सुक्यम् , तेन कामुकभाग्यम् ; कान्तेः प्रसरणेनाञ्चलचाञ्चल्यद्वारा भूषाव्यक्तिः तत्सौन्दर्यातिरेकश्च ध्वन्यते । श्रीविधेश्चायं श्लोकः । स्वभावोक्त्यनुप्राससंसृष्टिरलङ्कारश्च ॥ ८२ ॥

रसार्णवकारादयस्तु प्रेष्यामप्यभिसारिकां स्वीकृत्य—

स्रस्तस्रक्कबरीभरं सुललितव्यावृत्तिहालामदै-
रव्यक्ताक्षरजल्पितं प्रतिपदं विक्षिप्तबाहालतम् ।
सङ्केतालयमेत्य कङ्कणरवैरुद्बोध्य सुप्तं प्रियं
प्रेष्या प्रेमवशात्तनोति निटिलभ्रूवल्लिसन्तर्जनम् ॥

इत्युदाहरन्ति, विशेषेणाभिसारिकाभेदचेष्टा निर्दिशन्ति च ।

दर्पणे पुनस्तासामभिसारस्थानान्यपि—

'क्षेत्रं वाटी भग्नदेवालयो दूतीगृहं वनम् ।
मालयं च श्मशानं च नद्यादीनां तटं तथा ॥
एवं कृताभिसाराणां पुंश्चलीनां विनोदने ।
स्थानान्यष्टौ' ॥ इत्यभिहितानि ।

प्रदर्शितपूर्वान्नायिकाभेदान् सहेतुनिर्देशमनूद्दिशति—

मुग्धाया लज्जाप्राधान्येन, मध्याया लज्जामदनसाम्येन, प्रगल्भायाः प्राकाश्यप्राधान्येन, धीराया धैर्यप्राधान्येन, अधीराया अधैर्यप्राधान्येन, धीराधीराया धैर्याधैर्यप्राधान्येन, ज्येष्ठायाः स्नेहाधिक्यप्राधान्येन, कनिष्ठायाः स्नेहन्यूनत्वप्राधान्येन, परोढायाः सङ्गुप्तिप्राधान्येन, मुग्धाया इव कन्यकायाश्च, सामान्यवनिताया धनप्राप्तिप्राधान्येनाष्टनायिकावर्णनमिति विशेषः ।

लज्जाप्राधान्यादिपदेभ्यो हेतौ तृतीया । लज्जादिप्राधान्य मुग्धादीनां मिथो भेदे धीरमुग्धाद्यकविंशतिविधत्वे निबन्धनम् । अष्टविधत्वे त्ववस्थाभेद एव हेतुरिति बोध्यम् ।

सङ्गुप्ती रहस्यगोपनम् । प्राकाश्यं प्रगल्भता । मुग्धावत्कन्यकाया लज्जाप्राधान्येनेति शेषः ।

मुग्धाकन्यकयोर्मध्ये सामान्यविशेषभाव एवेत्युक्तमेव । यथाश्रुते तु परिणयोऽपि भेदकः । विशेषो भेदः ।

अथावस्थाविशेषवशेन प्रवत्स्यत्पतिकाऽभिधं नवममपि नायिका भेदं निरूपयिष्यन् दार्ढ्याय तावदमरुकविकृतोदाहरणं दर्शयति—

प्रवासार्थं प्रतिष्ठासमानं प्रियं वारयितुं काचिद्भङ्ग्या स्वजीवितं वदति—

प्रस्थानं वलयैः कृतं प्रियसखैरस्रैरजस्रं नतं
धृत्या न क्षणमासितं व्यवसितं बुद्ध्याऽपि गन्तुं पुरः ।
यातुं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिता
गन्तव्ये सति जीवित ! प्रियसुहृत्सार्थः किमु त्यज्यते ॥८३॥

हे जीवित ! मम जीवन ! प्रियतमे कान्ते यातुं विदेशं गन्तुं निश्चितं कृतनिर्णयं चेतो मनो यस्य तादृशे न तु गच्छति सति वलयैः कङ्कणैः प्रस्थानं यात्रा कृतं विहितं प्रियप्रवासश्रवणजन्यविरहकार्श्येन कराद्भ्रष्टम् । तथा प्रियसखैरतिप्रियैः अस्रैरश्रुभिः अविरलं नतं पतितम् । एवं धृत्या धैर्येण क्षणं काललवम् अपि का कथा यामदिनादीनां न आसितं नैव स्थितम् । तथा बुद्ध्या चेतनयाऽपि पुरोऽग्रे एव न तु पश्चात् गन्तुं व्यवसितमुद्युक्तम् । इत्थं यदि सर्वेऽखिलाः भवत्सुहृदः समं सहैव प्रस्थिताः प्रयाताः, तदा त्वयाऽपि गन्तव्ये प्रस्थातव्ये निश्चिते सति प्रियसुहृदां दयितमित्राणां सार्थः सङ्घातः किमु कथं त्यज्यते अवश्यं गम्यताम् इत्यर्थः ।

त्वत्प्रस्थानोत्तरं मज्जीवनं न स्थास्यतीत्यवगत्य मा प्रवात्सीरिति प्रियोपदेशोऽभिप्रेतः ।

तथा च 'सार्थो वणिक्समूहे स्यादपि सङ्घातमात्रके' इति मेदिनी ।

इह वलयभ्रंशादिभिः कार्श्यम्, तेन विरहव्यलीकम्; अस्रस्य प्रियसखत्वेन हृदयस्थत्वम्; धृतिबुद्ध्योः स्त्रीत्वेन स्वजातिप्रेम्णा स्थित्यौचित्यम्; प्रवासगतेर्निश्चयेन भाविता विप्रलम्भशृङ्गारश्च प्रतीयते । समुच्चयोऽलङ्कारश्च ॥ ८३ ॥

वक्तव्यशेषमाह—

इत्यादिप्राचीनग्रन्थलेखनादग्रिमक्षणे देशान्तरनिश्चितगमने प्रेयसि प्रवत्स्यत्पतिकाऽपि नवमी नायिका भवितुमर्हति॥

प्रवत्स्यन् प्रवासं गमिष्यन् पतिर्यस्या इति विग्रहः। एवं प्रवसत्प-

तिकाऽपि दशमी नायिका सिद्ध्यति। तदुदाहरणन्त्वग्रे वक्ष्यामः। विश्वनाथस्त्विदमेव तदुदाहरणमभ्युपागमत् ॥

तत्र हेतुमभिधत्ते—

तथा हि, तस्याः प्रोषितपतिका-विप्रलब्धो-त्कासु नान्तर्भावः, भर्तुः सन्निधिवर्तित्वात्। न कलहान्तरितायामन्तर्भावः, कलहाभावादनवमानितपतित्वाच्च। नापि खण्डितायामन्तर्भावः, प्रियस्यान्योपभोगचिह्नितस्यागमनाभावात्, प्रियायाः कोपाभावदर्शनात्, काकुवचन-कातरप्रेक्षणादि-सञ्चिन्तान्तःपक्षपातित्वदर्शनाच्च। न वासकसज्जायामन्तर्भावः, वारनियमाभावात्, सज्जीकरणाभाव-निर्वेदादिदर्शनाच्च। न स्वाधीनपतिकायामन्तर्भावः, अग्रिमक्षण एव सङ्गस्य विच्छेददर्शनात्। न हि स्वाधीनपतिकायाः कदाचिदपि सङ्गविच्छेद इति सम्प्रदायः। व्रजन्नपि पतिः स्वाधीनपतिकया निरुध्यते। अन्यथा भर्तरि स्वाधीनत्वमेव भज्येत। नेह तथा, सर्वथा भर्तुर्विदेशगमनात्। किंच निर्वेदाश्रुपातनिःश्वासवनविहारादिमदनमहोत्सवव्यतिरेकदर्शनाच्च। नाप्यभिसारिकायामन्तर्भावः, अभिसारोत्सवाभावात् अन्तस्तापदर्शनाच्चेति युक्तमुत्पश्यामः।

निगदव्याख्यातमिदम्। अयमेव प्रवसत्पतिकाया अपि स्थापनाया अपि क्रमः।

इत्थं प्रवत्स्यत्पतिकासत्त्वं स्थापयित्वा लक्षयति—

लक्षणन्तु—यस्याः पतिरग्रिमक्षणे देशान्तरं यास्यत्येव सा प्रवत्स्यत्पतिका।

कान्तकर्तृकभविष्यत्प्रवासज्ञानप्रयोज्यसन्तापवत्त्वं तत्त्वम्।

प्रवासस्यानुत्पन्नत्वेन सन्तापप्रयोजकत्वानुपपत्त्या ज्ञानपर्यन्तानुधावनम्;

अत्रैव प्रवासस्य भविष्यत्त्वं निरस्य भवत्त्वं च प्रवेश्य प्रवसत्पतिकाऽपि लक्षणीया ।

विशेषग्रहाय चेष्टा निर्दिशति—

अस्याश्चेष्टाः काकुवचन-कातरप्रेक्षण-गमनविघ्नोपदर्शन-निर्वेद-सन्ताप-सम्मोह-निश्श्वास-बाष्पादयः ।

काकुवचनं गद्गदोक्तिर्वक्रोक्तिर्वा । कातरता दैन्यम् । गमनविघ्नोपदर्शनं विहाय दशम्या अपीमा एव चेष्टा भवन्ति ।

मुग्धां प्रवत्स्यत्पतिकामुदाहर्तुमुपन्यस्यति—

मुग्धा प्रवत्स्यत्पतिका यथा ।

कोऽपि सकौतुकं वदति—

प्राणेश्वरे किमपि जल्पति निर्गमाय
क्षामोदरी वदनमानमयाञ्चकार ।
आली पुनर्निभृतमेत्य लतानिकुञ्ज-
मुन्मत्तकोकिलकलध्वनिमाततान ॥ ८४ ॥

प्राणेश्वरे जीवितेशे निर्गमाय विदेशगमनाय किमपि वियोगभावनाजदुःखजन्यकण्ठावरोधात् ईषदस्फुटं जल्पति कथयति सति क्षामोदरी क्षीणमध्या नायिकाऽन्यथा निषेद्धुमशक्नुवतो वदनं दुःखेन लज्जया च आनमयाञ्चकार ईषदनमयत् । आली तस्याः सहचरी पुनः किन्तु निभृतं गुप्तं यथा भवति तथा लतानिकुञ्जं वल्लीमण्डपम् एत्य उन्मत्तस्य वसन्तागमात् क्षीवतमस्य कोकिलस्य पिकस्येव यद्वा तस्य कलध्वनिं मधुरशब्दम् आततान भूयश्चकारेत्यर्थः ।

ऋतुराजः प्राप्त इति भावः ।

इहेश्वरत्वेनेतरानियोज्यता, तया प्रतीकाराक्षमत्वम्, तेन दुःखातिरेकौचिती; गद्गदोक्त्या नायकस्य पारवश्येन प्रवासात्क्लेशातिशयः; वदनानमनेन दुःखलज्जे; निकुञ्जत्वेन तत्रत्यकपटस्यान्यालक्ष्यता; कोकिलस्योन्मत्तताकलध्वनिबहुविधानाभ्यां वसन्तप्रत्यासत्तिः, तया प्रवास-

प्रस्थानस्यायुक्तत्वेनाविधेयता वस्तुविप्रलम्भशृङ्गाररसश्च ध्वन्यते । लुप्तोपमा निदर्शना चाऽलङ्कारश्च ॥ ८४ ॥

मध्यां तामुदाहर्तुमुपक्रमते—

मध्या प्रवत्स्यत्पतिका यथा ।

काचिद् ब्रूते—

गन्तुं प्रिये वदति निश्श्वसितं न दीर्घ-
मासीन्न वा नयनयोर्जलमाविरासीत् ।
आयुर्लिपिं पठितुमेणदृशः परन्तु
भालस्थलीं किमु कचः समुपाजगाम ॥ ८५ ॥

प्रिये गन्तुं विदेशं यातुं वदति सति एणदृशो मृगाक्ष्याः निश्श्वसितं विरहदुःखात् दीर्घमायतं नासीन्नाभूत् । वा तथा नयनयोश्चक्षुषोः जलम् अश्रु नाविरासीन्नोज्जगाम । परन्तु तस्याः आयुर्लिपिं ब्रह्मलिखितां जीवितकालसूचकवर्णावलीं पठितुम् आयुरवशिष्टमस्या न वेति ज्ञानाय वाचयितुम् इव कचः दुःखजवसनविस्रंसेन सीमन्तान्निपतितः अलकः किमु ? भालस्थलीमलिकपट्टिकां समुपाजगाम समाययावित्यर्थः । प्रियतद्वचः शृण्वन्त्येव शिथिलकचा मुमूर्च्छेति भावः । तथा च 'आयुर्जीवितकाले ना' इत्यमरः ।

अत्र निश्श्वसितजलपदोत्तरैकवचने एकस्यापि तस्यानुद्गमम्, स तस्यास्तद्वचश्श्रवणसमय एव मूर्च्छाम्, सा प्रणयोत्कर्षद्योतकं दुःखं च व्यनक्ति । अन्यस्याऽपि मूर्च्छायां जीवनमवगन्तुमात्मीयो यतत इति समासोक्त्या संसृष्टोत्प्रेक्षाऽलङ्कारश्च ॥ ८५ ॥

प्रौढां तामुदाहर्तुमभिधत्ते—

प्रौढा प्रवत्स्यत्पतिका यथा ।

प्रवत्स्यन्तं गोविन्दं काचित् पृच्छति—

नायं मुञ्चति सुभ्रुवामपि तनुत्यागे वियोगज्वर-
स्तेनाहं विहिताञ्जलिर्यदुपते ! पृच्छामि सत्यं वद ।

ताम्बूलं कुसुमं पटीरमुदकं यद्द बन्धुभिर्दीयते
स्यादत्रैव परत्र तत्किमु विषज्वालावलीदुस्सहम् ॥८६॥

हे यदूनां वृष्णीनां न त्वस्माकम् ( अन्यथा कथं तितिक्षा ) पते ! नाथ ! श्रीकृष्ण ! सुभ्रुवामङ्गनानाम् अयं मयाऽनुभूयमानः वियोगज्वरो विरहसन्तापः तनोर्देहस्य त्यागे निधने अपि किमु जीवने यतः न मुञ्चति नो जहाति, तेन हेतुना विहिताञ्जलिः कृतकरसम्पुटा पृच्छाम्यनुयुञ्जे। त्वं तदुत्तरं सत्यम् अवितथं वद कथय न तु प्रतारय। बन्धुभिर्बान्धवैः प्रेतमुद्दिश्य ताम्बूलं नागवल्लीदलं कुसुमं पुष्पं पटीरं चन्दनम् उदकं पय इति यत् दीयते वितीर्यते तत् ताम्बूलादि अत्रैहलोक इव परत्र परलोकेऽपि विषज्वालावलीव गरलकीलमालेव दुस्सहमसह्यं स्यात् किमु ? इत्यर्थः।

बन्धुदत्तं ताम्बूलादि जीवने यथा विरहिण्याः सन्तापकं तथैव किं मरणेऽपीति प्रश्नस्य त्वयि गते मे मरणमवश्यं स्यादित्याशयः।

अत्र यदुपतित्वेन सम्बोधनमात्मानं प्रत्यौदासीन्यं मध्ये निधाय प्रवासौचितीम्; यद्वा पारलौकिकसकलवृत्तवेत्तृत्वद्वारा प्रश्नौचित्यम्, सुभ्रुवामितिविशिष्य स्वानुपादानं स्वमुखप्रक्षितया कदाचित् प्रियासत्योत्तरदानसम्भवेन तदभावौचित्यम्; प्रश्नो विरहे स्वमरणनियमम्; स प्रवासाभावौचित्यं चावेदयति। विशेषोक्तिर्लुप्तोपमया संसृज्यते च॥

परकीयां तामुदाहर्तुमाह—

परकीया प्रवत्स्यत्पतिका यथा।

काऽपि परकीया प्रवत्स्यन्तं कान्तमुपालभते—

न्यस्तं पन्नगमूर्ध्नि पादयुगलं भक्तिर्विमुक्ता गुरो-
स्त्यक्ता नीतिरकारि किं न भवतो हेतोर्मया दुष्कृतम् ॥
अङ्गानां शतयातना नयनयोः कोऽपि क्रमो रौरवः
कुम्भीपाकपराभवश्च मनसो युक्तं त्वयि प्रस्थिते ॥८७॥

हे कान्त ! भवतो हेतोः कारणात् सङ्केतस्थलागमने पन्नगमूर्ध्नि सर्पशिरसि पादयुगलमङ्घ्रिद्वयं न्यस्तमारोपितं गुरोः पित्रादेः भक्तिः

श्रद्धा आज्ञाकारिता विशेषेण मुक्ता त्यक्ता। किञ्च नीतिर्न्यायः कुलाङ्गनामर्य्यादा त्यक्त्वोत्सृष्टा। इत्थं मया किं दुष्कृतं पापं नाकारि अपि तु सर्वं व्यधायि। तस्मान्मम त्वयि प्रस्थिते प्रयाते प्रयातुमुद्यते वा सति अङ्गानां हृदयादीनां शतयातनाः निरये पापफलोपभोगात् वस्तुतो विरहाग्नितापात् अगणिततीव्रवेदनाः यद्भवेयुः, तथा नयनयोः कोऽप्यकथनीयः रौरवस्य तन्नामकनरकोपभोगस्य क्रमः प्रारम्भः वस्तुतो रुरोर्हरिणस्यायं रौरवः क्रमो रीतिः रोदनादिनोच्छूयतारक्तत्वे यत्स्यात् च तथा मनसो हृदयस्य कुम्भीपाकस्य नरकविशेषस्य वस्तुतः कुम्भ्यां कलश्यां पाकस्य पुटपाकस्य पराभवः क्लेशः यद्भवेत् तत् युक्तमेवेत्यर्थः।

पापिनामङ्गानां पापोपभोगः समुचितः, यद्वा त्वदर्थं मयैवं क्लेशः सोढव्यः, त्वं तु मां त्यक्त्वा गन्तुमुद्यतोऽसीत्यहो ते विवेक इति भावः।

इह सम्बोधनपदानुपादानं तद्विषयकं रोषम्; पन्नगफणे चरणद्वयारोपः साहसिक्यम्, तच्चानुरक्त्यौत्कट्यम्; गुरुत्वं मान्यताम्, तच्छ्रद्धात्यागानौचित्यञ्च; नीतिपदं चापरिहेयतामवगमयति।

भवतो हेतोरित्यत्र 'षष्ठी हेतुप्रयोगे' इत्यनेन षष्ठी। भवत इत्युपक्रान्तस्य त्वयीत्युपसंहरणेनापि न प्रक्रमभङ्गदोषः, वक्त्र्या वैक्लव्यप्रकर्षसूचनात्। समुच्चयश्छायासमासोक्तिश्चालङ्कारौ च ॥ ८७ ॥

सामान्यां तामुदाहर्तुमाचष्टे—

सामान्या प्रवत्स्यत्पतिका यथा।

कश्चित्तच्चरितं भणति—

मुद्रां प्रदेहि वलयाय भवद्वियोग-
मासाद्य यास्यति बहिः सहसा यदेतत्।
इत्थं निगद्य विगलन्नयनाम्बुधारा
वाराङ्गना प्रियतमं करयोर्बभार ॥ ८८ ॥

हे कान्त! यद्यस्मात् एतद्विद्यमानं वलयं भवतो वियोगम् आसाद्य लब्ध्वा सहसा झटित्येव कराद्बहिः यास्यति वियोगजकार्श्यात् अधः पतिष्यति। तस्मात्तदा त्वन्मङ्गलमूलाय वलयाय कङ्कणं कर्तुं मुद्रां दी-

नारं स्वकरस्थाम् ऊर्मिकां वा प्रदेहि मह्यं वितर। इत्थमेवं निगद्य सविशेषं कथयित्वा विगलन्त्यो नेत्राभ्यामधः पतन्त्यः नयनाम्बूनामश्रूणां धारा वेणयो यस्यास्तादृशी वाराङ्गना वेश्या प्रियतमं कान्तं करयोः पाणिद्वये हस्तयुगावच्छेदेन बभार जग्राहेत्यर्थः।

अत्र करयोरिति सप्तम्यर्थोऽवच्छेदकत्वम्। वलयायेत्येकवचनेन बहुवलयधारणाशक्तिद्वारा दौर्बल्यम्, तेन वियोगजदुःखातिरेकः; दीनारयाञ्चया वेश्यात्वम्; अङ्गुरीयकयाचनया भाविवियोगजकार्श्यम्, तेन प्राग्वदेव; सहसेत्यनेन 'यास्यामीत्युदिते तन्व्या वलयोऽभवदूर्मिका' इतिवद्विरहावगमसमकालपातिता, तया पूर्ववत्; यद्वाऽऽकस्मिकपाते तदानीं नायकमिलनाभावात् प्रागेव याचनौचित्यम्; करद्वयग्रहणेन निर्मोचनाशक्यता निर्बन्धश्च, ततो मुद्राया अवश्यप्रदेयत्वं च द्योत्यते। अनुप्रासोऽलङ्कारश्च ॥ ८८ ॥

अथ प्रवसत्पतिकाख्यदशमनायिकोदाहरणानि। तत्र मुग्धा प्रवसत्पतिका यथा—

वाचो माङ्गलिकीः प्रयाणसमये जल्पत्यनल्पं जने
केलीमन्दिरमारुतायनमुखे विन्यस्तवक्त्राम्बुजा।
निश्वाससग्लपिताधरोपरिपतद्बाष्पार्द्रवक्षोरुहा
बाला लोलविलोचना शिव शिव प्राणेशमालोकते।

मध्या सा यथा—

दूर्वाक्षताय शुभमक्षतमानयस्व
श्वश्रूमुखादशनिपातमिवाकलय्य।
प्रस्वेदवारिविरहानलतापयोगा-
त्त्र्यक्तं ददौ गुरुजनस्य करे मृगाक्षी ॥

प्रगल्भा सा यथा—

गच्छ गच्छसि चेत्कान्त! पन्थानः सन्तु ते शिवाः।
ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान् ॥

एवं परकीयासामान्ययोरपि तयोरुदाहरणे स्वयमूहनीये।

अथ 'गुणतो नायिकाऽपि स्यादुत्तमा मध्यमाऽधमा' इति भोजानुशासनादुत्तमत्वादिभिर्नायिका विभजन्नुत्तमां लक्षयति—

अहितकारिण्यपि प्रियतमे हितकारिण्युत्तमा ।

स्पष्टम् । तथा च रसार्णवे—

विदधत्यप्रियं पत्यौ स्वयमाचरति प्रियम् ।
वल्लभे सापराधेऽपि तूष्णीं तिष्ठति सोत्तमा ॥ इति ।

विशेषज्ञानाय चेष्टामाह—

अस्या उत्तमैव चेष्टा ।

उत्तमा प्रियशुश्रूषासस्मितवचनमुखप्रसादादिः ।

तामुदाहर्तुमाचष्टे—

उत्तमा यथा ।

कोऽपि कथयति—

पतिश्शयनमागतः कुचविचित्रितोरस्थलः
प्रसन्नवचनामृतैरयमतर्पि वामभ्रुवा ।
अचर्चि सुभगस्मितद्युतिपटीरपङ्कद्रवै-
रपूजि विलसद्विलोचनचमत्कृतैरम्बुजैः ॥ ८९ ॥

कुचाभ्यां सपत्न्याः स्तनाभ्यां विचित्रितं गाढाश्लेषेण किर्मीरितम् उरःस्थलं वक्षोदेशो यस्य तादृश इति सद्यः कृतापराधोऽपि शयनं तल्पम् आगतः अयं पतिः वामा रुचिरा भ्रूर्यस्यास्तया उत्तमनायिकया प्रसन्नानि सप्रसादानि वचनान्येवामृतानि, यद्वा वचनान्यमृतानीव तैः अतर्पि समप्रायि । तथा सुभगाश्शोभनाः स्मितद्युतय एव पटीरपङ्कद्रवाश्चन्दनघनरसाः, यद्वा तदुपमाः तैः अचर्चि व्यलेपि । किञ्च विलसद्भिः शोभमानैः विलोचनचमत्कृतैर्नेत्रविभ्रमैः एव अम्बुजैः कमलैः अपूजि समर्च्यते स्मेत्यर्थः ।

उत्तमा कोपनिमित्तेऽपि न कुप्यतीति तात्पर्यम् ।

अत्र पत्युर्विशेषणद्वयेन सद्यः कृतापराधस्य प्रत्यक्षात्तीव्रत्वेनामर्षणीयता, तथाऽपि तत्क्षमया तस्या उत्तमात्वम्; उत्तमाया अपि तस्याः प्रतिकूलाचरणेन पत्युरधमता; वचनेष्वमृतत्वारोपादिना माधुर्यविशेषः; स्मितद्युतिषु चन्दनद्रवतादात्म्येन शैत्यसन्तापहारकत्वैः

नेत्रविभ्रमेषु कमलाभेदेनार्द्रता, तया जातुचित्कोपोदयासम्भवः; तर्पणादिभिरातिथ्यविज्ञत्वं, तत्र भक्त्युत्कर्षः, तेनोत्तमात्वं च सूच्यते।

यतिभङ्गसमाधिस्तूक्त एव। रूपकसंसृष्टरूपकोपमासन्देहसङ्करालङ्कारः। पृथ्वीलता च्छन्दश्च ॥ ८६ ॥

मध्यमां लक्षयति—

हिताहितकारिणि प्रियतमे हिताहितचेष्टावती मध्यमा।

अनुकूलकारिणि दयितेऽनुकूलकरी, प्रतिकूलकारिणि प्रतिकूलकृन्मध्यमेत्यर्थः।

तदुक्तं कौस्तुभे—

'प्रियाप्रियकरे कान्ते या प्रियाप्रियकारिणी। मध्यमा सा' इति ;

तच्चेष्टामाह—

अस्यास्तु व्यवहारानुसारिणी चेष्टा।

व्यवहारः पत्युराचरणम्।

तामुदाहर्तुमाख्याति—

मध्यमा यथा।

काचित्कामपि कथयति—

कान्ते सागसि कञ्चुकस्पृशि तया साचीकृतग्रीवया
मुक्ताः कोपकषायमन्मथशरक्रूराः कटाक्षाङ्कुराः।
साकूते दरहासकेसरवचोमाध्वीकधारालसा
प्रीतिः कल्पलतेव काचन महादानीकृता सुभ्रुवा ॥ ९० ॥

सागसि सापराधे अनुनयमकृत्वैव कञ्चुकस्पृशि कूर्पासकस्पर्शकृति कान्ते! साचीकृता निसर्गतोऽवक्राऽपि रोषेण वक्रतां नीता ग्रीवा कन्धरा यया तथाभूतया सुभ्रुवा कोपेन कषाया लोहिताश्च ते मन्मथशराः कामबाणा इव, यद्वा कोपकषायस्य मन्मथस्य शरा इव क्रूरा दारुणाः कटाक्षाङ्कुरा अपाङ्गेक्षाप्ररोहाः मुक्ता निक्षिप्ताः। पुनः साकूते सानुनयाशये तस्मिन् दरहासः स्मितमेव केसरः किञ्जल्कः, यद्वा केसर इव, यत्र तादृशं वचो भाषितमेव माध्वीकं मधु, तदिव वा,

तस्य वाङ्मधुनः धारया प्रवाहेण अलसा मन्दीकृतान्यरसा कल्पलतेव सुरवल्लीव काचन वक्तुमशक्या प्रीतिः प्रेम। आनन्दः महादानीकृता स्वर्णभारादिवद्दत्तेत्यर्थः। तथा च 'कषायोऽथ सुरभौ लोहितेऽन्यवत्' इति विश्वः।

अत्र सापराधे प्रिये रोषेण, अनुनयपरे च प्रीतिदानेन मध्यमात्वम्; अपराधिकृतकञ्चुकस्पर्शेन रोषौचिती; आकस्मिककञ्चुकस्पर्शेन भीतिचकितत्वम्; ग्रीवावक्रीकरणक्रूरकटाक्षक्षेपाभ्यां रोषः, तेनापराधौत्कट्यम्; अङ्कुरत्वेन कटाक्षतोक्षणता; वचसि माध्वीकतादात्म्यसाम्याभ्यां माधुर्योन्मादकत्वे; प्रीतौ तद्धाराऽऽलस्येन सविलासवलनम् कल्पलतासाम्येन तस्याः सकलाभिलाषपूरकत्वम्; महच्छब्देन दानस्यासुलभत्वं च द्योत्यते। दीयत इति दानमिति ल्युट्। महादानीकृतेत्यभूततद्भावे च्विः। रूपकोपमासन्देहसङ्करालङ्कारश्च ॥ ६० ॥

अधमां लक्षयति—

हितकारिण्यपि प्रियतमेऽहितकारिण्यधमा।

अहितकारिणि त्वहितकरणस्य का कथा।

तथा च—

अधमा कथिता सा या हितेऽप्यहितकारिणी।

इति मन्दारमरन्दोक्तिः।

अस्या एव कोपहेतुकं नामान्तरमाह—

एषैव निर्निमित्तकोपना चण्डोत्यभिधीयते।

कोपार्थको हि चडिधातुः।

तच्चेष्टां दर्शयति—

अस्या निष्कारणकोपत्वादधमैव चेष्टा।

अधमा नीचा सदा तर्जनादिः।

काचन चण्डीमाक्रोशति—

प्रस्थाने तव यः करोति कमलच्छायां मुखाम्भोरुहे

श्रीखण्डद्रवधारया शिशिरया मार्गं पुरः सिञ्चति।

तस्मिन् प्रेयसि विद्रुमद्रवनदीरिङ्गत्तरङ्गभ्रमि-

भ्रान्तक्लान्तसरोजपत्रसदृशा भूयो दृशा क्रुध्यसि ॥ ९१ ॥

यः प्रेयान् तव प्रस्थाने उपवनादिविहाराय यात्रायां मुखाम्भोरुहे तव वक्राम्बुजे कमलच्छायां पद्मकरणकातपनिवृत्तिं करोति। तथा पुरोऽग्रे मार्गमध्वानं शिशिरया शीतया श्रीखण्डद्रवस्य चन्दनरसस्य धारया प्रवाहेण सिञ्चत्यार्द्रीकरोति। तस्मिन् तादृशोपकारपरायणे प्रेयसि प्रेष्ठे विद्रुमद्रवनद्यां प्रवालरससरिति रिङ्गतामुच्छलतां तरङ्गाणां वीचीनां भ्रमावावर्ते भ्रान्तं घूर्णितम् अत एव क्लान्तं ग्लानं यत् सरोजपत्रं कमलदलं तेन सदृशा तुल्यया दृशा दृष्ट्या भूयो भृशं मुहुर्वा क्रुध्यसि कुप्यसीत्यर्थः।

एवमुपचारपरे प्रेयसि तव कोपोऽनुचिततम इति तात्पर्यम्।

तथा च 'छाया त्वनातपे कान्तौ' इति वैजयन्ती, 'द्रवः प्रद्रावरसयोः' इति विश्वः, 'प्रवालो विद्रुमः प्रोक्तः' इति क्षपणकश्च।

इह सम्बोधनानुक्त्या सख्यां रोषः; छायाविधानमार्गसेचनाभ्यां प्रेयस उपचारपरत्वम्, तेन प्रीतिप्रकर्षः, तावता तत्र कोपानौचित्यम्; दृशो विशेषणेनातिरक्तता चञ्चलता च, ततः कोपातिरेकः, कोपस्य भूयस्त्वनिर्निमित्तत्वाभ्यां चण्डीत्वरूपाधमात्वं च प्रतीयते। यमकानुप्राससंसृष्टोपमालङ्कारश्च ॥ ९१ ॥

न्यूनताक्षेपं समादधाति—

विस्तरभिया प्रत्येकमेतासामुत्तममध्यमाधमभेदा नोदाहृता इति।

इति शब्दः 'इति हेतुप्रकरणप्रकाशादिसमाप्तिषु' इति शाश्वतोक्त्या समाप्त्यर्थकः, नायिकाभेदनिरूपणस्यात्रैव पर्यवसानात्। सखीदूत्योस्तु तदुपयोगितया ततो भेदः।

विश्वनाथेनेह हावभावाद्योऽष्टाविंशतिः सत्त्वजा यौवनेऽलङ्काराः प्रदर्शिताः।

इति रसमञ्जरीसुरभौ नायिकाभेदनिरूपणम् ॥



अथ नायिकोपयोगिन्योः सखीदूत्योरभ्यर्हितत्वेन सखीमादौ निरूपयंल्लक्षयति—

विश्वासविश्रामकारिणी पार्श्वचारिणी सखी ।

नायिकाया विश्वासविश्रामौ विश्रम्भनिर्वृत्ती कारयति तच्छीला, पार्श्वचारिणी सहचरणशीला सखीत्यर्थः । स्वमण्डनादिकारित्व-स्वपार्श्वचारित्वाभ्यां नायिकाविशिष्टत्वं तत्त्वमिति लक्षणम् । तदुक्तम्—

परिहासमुपालम्भं तथा शिक्षाञ्च मण्डनम् ।
या करोति मुदा सा तु सखीह परिकीर्तिता ॥

इति कौस्तुभे ।

सखीकर्माणि निर्दिशति—

अस्या मण्डनो–पालम्भ–शिक्षा–परिहासप्रभृतीनि कर्माणि ।

मण्डनमलङ्करणं नायिकायाः प्रसाधनम्, उपालम्भोऽनुचिताचारे भर्त्सनम्; शिक्षा हिताहितप्रवृत्तिनिवृत्त्युपदेशः; परिहासो नर्मवचः ।

तत्र मण्डनमुखेन सखीमुदाहर्तुमाह—

तत्र मण्डनं यथा ।

काऽपि ब्रूते—

स्तनकनकमहीधरोपकण्ठे प्रियकरपल्लवमुल्लसत्प्रमोदम् ।
रहसि मकरिकामिषाल्लिखन्तीं कमलमुखी कमलैः सखीं जघान ॥९२॥

काचित् कमलमुखी पद्मानना रहसि एकान्ते नायिकायाः स्तनावेव कनकमहीधरौ स्वर्णपर्वतौ, यद्वा ताविव, तयोरुपकण्ठेऽन्तिके तटे मकरिकाया ग्राहाकृतिपत्रभङ्गस्य मिषात् मकरिकां लिखामीति कपटात् उल्लसन्नुज्जृम्भमाणः प्रमोद आनन्दो यस्य तं सपुलकं प्रियस्य नायकस्य करपल्लवं शयकिसलयं लिखन्तीं तूलिकया विन्यस्यन्तीं सखीमालिं कमलैर्लीलापद्मैः, यद्वा, कटाक्षनलिनैः, जघान ताडयामास सासूयमपश्यत् इत्यर्थः ।

कितवायाः कैतवेऽवगते निग्रह उचित एवेत्याकूतम् ।

तथा च 'उपकण्ठान्तिकाभ्यर्णा' इत्यमरः ।

अत्र स्तनयोः कनकगिरितादात्म्यसाम्याभ्यामौन्नत्यम् गौरिमा कार्कश्यञ्च; उपकण्ठोपादानेनोपरिनायककरस्पर्शायोग्यत्वम्, तेनात्युच्चैस्त्वम्; रहस्त्वेन प्रियकरकृतस्तनस्पर्शौचितो च द्योत्यते। परिहासस्य नर्मवचोरूपत्वेन नात्र समावेशः। रूपकोपमासङ्करालङ्कारः। पुष्पिताग्रा छन्दश्च ॥ ६२ ॥

उपालम्भद्वारा तामुदाहर्तुमाह—

उपालम्भो यथा।

सखी नायकमुपालभते—

सान्द्रध्वानैर्मुखरितदिशश्श्रेणयस्तोयदानां
धारासारैर्धरणिवलयं सर्वतः प्लावयन्ति।
तेन स्नेहं वहति विपुलं मत्सखी युक्तमेव
त्वं निःस्नेहो यदसि तदिदं नाथ ! मे विस्मयाय ॥६३॥

हे नाथ प्रभो ! सान्द्रध्वानैर्घनगर्जितैः मुखरिताः सशब्दीकृता दिशो हरितो याभिः ताः तोयदानां पयोमुचां श्रेणयो राजयः धारासारैरविरलवृष्टिभिः धरण्या वलयं मण्डलं यत् सर्वतोऽभितः प्लावयन्ति जलपूर्णीकुर्वन्ति। तेन स्नेहः जलसम्बन्धेन कामोद्दीपकवर्षागमेन च हेतुना मत्सखी ममाली नायिका विपुलम् अधिकं स्नेहं गुणविशेषं प्रेमाणं च युक्तमुचितमेव वहति धारयति। किन्तु तथाऽपि त्वं यत् निःस्नेहः स्नेहहीनः असि वर्तसे। तदिदम् मे मम विस्मयायाद्भुताय भवति इत्यर्थः।

वर्षागमे प्रणयिनां स्नेहः समुचित इत्याशयः।

इह नाथेति सम्बोधनेन पराधीनत्वम्, तेनाविचिन्त्यकारिता; अस्मदा सख्यां पक्षपातः, तेन बीजभूतः सहृदयत्वादिगुणः, नायिकायाः स्नेहवहनेन स्वभावसारल्यम्, प्रियागमननिश्चयश्च, ततस्तद्वत्सरोद्दीपकत्वं, तथाऽपि नायकस्य स्नेहाभावेन हृदयकार्कश्यं सख्युपालम्भोचितौ च व्यज्यते। विशेषोक्तिरलङ्कारः। मन्दाक्रान्ता छन्दश्च ॥ ६३ ॥

शिक्षामुखेन तामुदाहर्तुमुपक्रमते—

शिक्षा यथा।

सखी श्रीकृष्णमभिसरन्तीं श्रीराधां शिक्षयति—

सानन्दमालि ! वनमालिविलोकनाय
निर्गच्छ कुञ्जमिति किन्तु विचारयेथाः।
झङ्कारिणो मधुलिहो दिवसे भ्रमन्ति
रात्रौ पुनश्चपलचञ्चुपुटाश्चकोराः ॥ ६४ ॥

हे आलि ! वनमालिनः श्रीकृष्णस्य विलोकनाय दर्शनाय सानन्दं यथा भवति तथा कुञ्जं निर्गच्छ व्रज। किन्तु परं दिवसेऽह्नि झङ्कारिणः शब्दविशेषवन्तः मधुलिहो भृङ्गाः, व्यक्त्या मुखरदुर्जनाः भ्रमन्ति सञ्चरन्ति। पुनस्तथा रात्रौ निशि चपलानि चन्द्रिकास्वादने पराक्रोशे च लोलुपानि चञ्चुपुटानि सृपाटिकादलानि मुखानि च येषां ते चकोरा जीवञ्जीवाः निखिलनैशवृत्तान्तसूचकाः पिशुनाश्च भ्रमन्ति। इतीदं द्वयं विचारयेथा विचिन्तयेरित्यर्थः।

तेभ्यः स्वं गोपायन्ती निभृतमभिसर। यद्वा, त्वन्मुखामोदलुब्धभ्रमद्भ्रमरझङ्कारैर्दिने; त्वद्वदनेन्दुकान्तिपिपासुचकोरचटुलचञ्चुरवैर्निशि च लोकास्त्वां ज्ञास्यन्तीति नाभिसरणीयम्। तदाग्रहे तु नाहमुत्तरदायिनीति भावः।

तथा च—

आपादलम्बिनी माला वनमालेति तां विदुः।
पत्रपुष्पमयी माला वनमाला प्रकीर्तिता ॥

इति विश्वः, 'चञ्चुश्चञ्चूः सृपाटिका' इति हैमः, 'जीवञ्जीवश्चकोरकः' इत्यमरश्च।

अत्र मधुपचकोरशब्दैर्लोकावगमसम्भवः, तेन गमनानौचित्यं निभृतगमनौचिती च; क्रमेण सौरभातिशयशालित्वेन मुखस्य पद्मताद्रात्म्यम्, कान्तिविशेषेण चन्द्राभेदश्च; मधुलिट्चकोरशब्दाभ्यां वाच्यावाच्यविवेकशून्या मुखरदुर्जनाः, रात्रिमात्रव्यापारेणोदरपूरकाः पिशुन-

प्रहरिणश्च; यद्वा, गीतिरताः प्रियाधरपिपासवश्च तरुणाः, ततः प्रतिबन्धसद्भावेन गत्यनौचितीः तदुपदेशेन स्वस्य हितत्वम्, निषिद्धस्यापि गमनस्यानुज्ञया स्वौदास्यञ्च सूच्यते ।

प्रकृताप्रकृतानां भ्रमरचकोराणां भ्रमणरूपैकधर्मसम्बन्धात्

'प्रकृतानामप्रकृतानाञ्चैकसाधारणधर्मान्वयो दीपकम्' ।

इति जगन्नाथलक्षितं दीपकमलङ्कारश्च ॥ ६४ ॥

परिहासद्वारा तामुदाहर्तुमाचष्टे—

परिहासो यथा ।

परिहासः सखीकृतः ।

काचिदभिधत्ते—

आगारभित्तिलिखितासु निवेदयस्व
कः सप्तमो दशसु मूर्त्तिषु लोकभर्तुः ।
इत्थं सखोजनवचः प्रतिपद्य सद्यः
सीता स्मितद्युतिभिरुत्तरयाञ्चकार ॥ ६५ ॥

अयि सखि सीते ! आगारभित्तौ गृहकुड्ये लिखितासु विन्यस्तासु लोकभर्तुर्नारायणस्य दशसु मूर्तिषु मीनादिरूपेषु सप्तमः अवतारः कः किन्नामकः? इति निवेदयस्व कथय तन्नामोच्चारय । इत्थमेवं सखीजनस्य वचः प्रतिपद्योपलभ्य श्रुत्वा सीता वैदेही सद्यः सत्वरं स्मितद्युतिभिरीषद्धासच्छटाभिः न तु वाग्भिः उत्तरयाञ्चकार प्रतिवचनं विदधावित्यर्थः । सखीभिर्नर्मणा रामस्य परिचयं पृष्टा सीता स्वपतित्वात्तन्नामानुच्चार्य्य स्मितेनैवाबोधयदित्यभिसन्धिः ।

इह लोकभर्तृत्वेनोपादानं तदाख्योक्तौ त्रपाऽभावौचितीम्, सा तत्कथनसम्भावनाम्; सखीजनत्वं तत्प्रश्नस्यावश्यमुत्तरणीयतां परिहासोपपत्तिञ्च; स्मितं पुनर्लज्जां नर्मावगमजन्यप्रसादं च, झटिति प्रत्युत्तरदानं प्रत्युत्पन्नमतित्वं च द्योतयति । अतिशयोक्त्यनुप्रासावलङ्कारौ च॥

परिहासप्रसङ्गादाह—

सख्याः परिहासवत् प्रियस्यापि परिहासः ।

प्रियकृत इत्यर्थः।

तद्द्वारा तामुदाहर्तुमाचष्टे—

यथा।

कश्चिद्व्याहरति—

भ्रूसञ्ज्ञयाऽऽदिशसि तन्वि! सखीं न वाग्भि-
रित्थं विहस्य मुरवैरिणि भाषमाणे।
राधा चिराय दशनव्रणदूयमान-
बिम्बाधरा वदनमानमयाञ्चकार॥ ९६॥

हे तन्वि! सखीं कस्मैचित्कार्याय भ्रुवः सञ्ज्ञया सूचनया इङ्गितेन आदिशस्याज्ञापयसि, वाग्भिर्वचनैः पुनः किमिति न आदिशसि इत्थमेवं मुरवैरिणि श्रीकृष्णे विहस्य स्मित्वा भाषमाणे ब्रुवति सति चिराय दशनव्रणैर्दन्तक्षतैः दूयमानः खिद्यमानः बिम्बमिवाधरो यस्याः सा राधा वृषभानुसुता वदनम् आनमयाञ्चकारेषन्नमयति स्मेत्यर्थः। प्रियपरिहासलक्ष्यं दन्तक्षतं निह्नोतुं लज्जया वा मुखमनमयदिति भावः।

तथा च—

'नामचेतनयोः सञ्ज्ञा सूचनायां करादिभिः' इति शाश्वतः।

इह हरेः सस्मितोक्तिः परिहासनैपुण्यम्; इङ्गितेनादेशो वचनाभावश्च; दन्तव्रणम् अधरस्य बिम्बौपम्यं मार्दवम्, तत्पोडौचित्यम् चिराय दूयमानता वचनाक्षमत्वम्; मुखनमनमपत्रपाञ्च व्यनक्ति। उपमालङ्कारश्च॥ ९६॥

तत्प्रसङ्गादेवाभिधत्ते—

प्रियस्य परिहासवत् प्रियाया अपि परिहासः।

प्रियाकृतोऽपि परिहास इत्यर्थः।

उदाहर्तुमाख्याति—

यथा।

कश्चनाशिषं ददाति—

दिव्यं वारि कथं, यतः सुरधुनी मौलौ, कथं पावको

दिव्यं, तद्धि विलोचनं, कथमहिर्दिव्यं स चाङ्गे तव।
तस्माद् द्यूतविधौ त्वयाऽद्य मुषितो हारः परित्यज्यता-
मित्थं शैलभुवा विहस्य लपितः शम्भुः शिवायास्तु वः॥ ६७॥

अयि हारहारकहर! त्वया सह विवादे वारि पयः दिव्यं शपथोपकरणं कथं मया मन्यताम्? यतः सुरधुनी गङ्गा तव मौलौ शिरसि तिष्ठति। तथा पावकोऽग्निः दिव्यं कथं मन्यताम्? हि यतः तत् तद्रूपं तव विलोचनं तृतीयं चक्षुः अस्ति। तथा अहिः फणी दिव्यं कथं मन्यताम्? यतः स फणी पुनस्तवाङ्गेऽवयवे तिष्ठति। तस्माद्दिव्यासम्भवाद्धेतोः अद्यास्मिन्नहनि द्यूतविधावक्षक्रीडायां त्वया न त्वन्येन केनापि मुषितश्चोरितः हारो मुक्तामाला परित्यज्यतां मुच्यतां दीयताम्, इत्थमेवं विहस्य स्मित्वा शैलभुवा पार्वत्या लपितो भाषितः शम्भुर्हरः वो युष्माकं शिवाय क्षेमाय अस्तु जायतां शिवं ददातु इत्यर्थः।

दिव्योपकरणानां तव सम्बन्धितया पक्षपातसम्भवेन दिव्यं न कारयामि, किन्तु स्फुटं जानाम्येव यत्त्वया हारो मुषित इति, दीयतामलं तत्त्वावगमे कपटेनेति परिहासस्याशयः। तथा च 'दिव्यं शपथः' इति शब्दकल्पद्रुमः।

अत्र सुरधुन्या मौलिवासेन, वह्नेर्नेत्रात्मतया, सर्पस्य सदाऽङ्गसङ्गेन च पक्षपातसम्भवः, तेन तदनङ्गीकारोपपत्तिः। द्यूतविधिना चौर्यकरणौचितो, परित्यागादेशेन प्रौढिः; तथा याचनाभावः, हारस्वामिता, सत्यपथावलम्बनं प्रेमभरो वा; शैलभूपदेन कार्कश्यम्, तेन तथोक्तेरौचित्यम्; शम्भुपदेन मङ्गलभूयोविधानञ्च प्रतीयते। काव्यलिङ्गमलङ्कारश्च॥ ६७॥

अथ दूतीं निरूपयंल्लक्षयति—

दूत्यव्यापारपारङ्गमा दूती।

दूत्ये *युवयुगलसंयोजनादिकृत्ये पारङ्गमत्वं प्रवीणत्वं दूतीत्वम्।

---

* दूतस्य कृत्यं दूत्यम् 'दूतवणिग्भ्यां च' इति वार्तिकेन यत्।

दूत्याः कृत्यानि निर्दिशति—

तस्याः सङ्घट्टन-विरहनिवेदनादीनि कर्माणि ।

संघट्टनं यूनोर्मिथोऽनुरागोत्पादनेन मेलनम् । आदिना वात्स्यायनोक्तकृत्यपरिग्रहः ।

प्रथमकृत्यद्वारा दूतीमुदाहर्तुमुपन्यस्यति—

सङ्घट्टनं यथा ।

काचन दूती नायिकामुपदिशति—

अञ्चति रजनिरुदञ्चति तिमिरमिदं चञ्चति मनोभूः ।
उक्तं न त्यज युक्तं विरचय रक्तं मनस्तस्मिन् ॥ ९८ ॥

अयि नायिके ! यतः रजनिर्निशा अञ्चति प्रत्यासीदति राजति वा । तथा इदं प्रत्यक्षं तिमिरं तमः उदञ्चति वर्धते । किञ्च मनोभूर्मनोजः कामः चञ्चति समुज्जृम्भते विचलति वा । तस्मात् युक्तमुचितम्, उक्तं स्वयं प्रतिश्रुतं मया वा कथितं नायकानुसरणम् न त्यज मा हासीः । तस्मिन् कान्ते, मनश्चित्तम्, रक्तमासक्तं विरचय विधेहीत्यर्थः ।

दूतीं प्रति नायिकोक्तिरियमिति मते तु उक्तं प्रतिश्रुतं नायकसँय्योजनं न त्यज, तस्मिंस्तत्कृत्ये मनो रक्तं विरचयेत्यन्वयः ।

अभिसारावसरो न हेय इति प्रथमपक्षे, कान्तस्त्वयाऽऽनीयतामिति पक्षान्तरे च भावः ।

इह रजन्यासत्तितमोव्यक्तिभ्यामभिसरणसौकर्यम् ; मनोभूत्वेनापरिहेयत्वावार्यत्वे; चञ्चनेन स्वविजयानुकूलसामग्रीलाभजन्यहर्षः, तत्प्रतिकूलाचरणे महादण्डसम्भवश्च; उक्तत्वेन स्वानभिनिवेशोऽवश्यविधेयता च, ततः प्रतिज्ञाहानेरनौचित्यं च सूच्यते ।

अभिसरणकारणानां युगपत्समवधानात् ।

'खलेकपोतन्यायेन बहूनां कार्यसाधने ।

कारणानां समुद्योगः स द्वितीयः समुच्चयः' ॥

इति विद्यानाथलक्षितः समुच्चयोऽलङ्कारः । उपगीतिच्छन्दश्च ॥ ९८ ॥

द्वितीयकृत्यमुखेन तामुदाहर्तुमभिधत्ते—

विरहनिवेदनं यथा।

कापि दूती राधादशां हरये निवेदयति—

चक्रे चन्द्रमुखी प्रदीपकलिका धात्रा धरामण्डले
तस्या दैववशाद्दशाऽपि चरमा प्रायः समुन्मीलति।
तद् ब्रूमः शिरसा नतेन सहसा श्रीकृष्ण ! निक्षिप्यतां
स्नेहस्तत्र तथा यथा न भवति त्रैलोक्यमन्धं तमः ॥ ६६ ॥

हे श्रीकृष्ण ! चन्द्रमुखी सुधांशुवक्त्रा श्रीराधा धरामण्डले भूवलये प्रदीपकलिका दीपशिखा धात्रा विधिना चक्रे व्यधायि। दैववशाददृष्टबलात् तस्या राधाया दीपशिखायाश्च यत् चरमा दशाऽवसानावस्था क्षाणतमावर्तिश्च प्रायो बाहुल्येन, समुन्मीलति समुल्लसति। तत्तस्माद्धेतोः नतेन नम्रेण, शिरसा उपलक्षिता कृतप्रणामा वयं ब्रूमो विज्ञापयामः—यत् तत्र तस्यां सहसाऽविलम्बेन तथा तेनप्रकारेण स्नेहः प्रेमा तैलञ्च भवता निक्षिप्यतां निधीयताम्, यथा त्रैलोक्यं त्रिभुवनम् अन्धंतमः विफलदृग्व्यापारं तिमिररूपं न भवति न जायते इत्यर्थः।

यथा तैलं विना दीपशिखाया निर्वाणे जगदन्धतमसावृतम्भवति, तथा त्वत्प्रणयमन्तरेण तस्या जीवनहानौ सौन्दर्यराशिभासा वञ्चितत्वाद्भवेदिति त्वर्यतामिति भावः।

तथा च 'स्नेहस्तैलादिकप्रेम्णोः' इति शाश्वतः, 'दशावर्तावस्थायाम्' इति विश्वश्च।

इह प्रदीपकलिकातादात्म्येन कान्त्युत्कर्षः, तेन प्रेमनिक्षेपौचिती; दैववशात्वोक्त्या जनानपराधः; ब्रूम इति बहुवचनेन प्रार्थितार्थसम्पादनावश्यकता; शिरानत्या विनयः, तेन सैव; स्नेहप्रक्षेपत्वरया विलम्बेऽवसानसम्भवः; त्रैलोक्ये तमस्तादात्म्येन सौन्दर्यसारराहित्यं च ध्वन्यते। अनुप्राससंसृष्टातिशयोक्तिरलङ्कारश्च ॥ ६६ ॥

एवं दूतीनां गुणा भेदा उपभेदाः कृत्यविशेषाश्चान्यतोऽवसेयाः।

तथाहि—

कलाकौशलमुत्साहो भक्तिश्चित्तज्ञता स्मृतिः ।
माधुर्यं नर्मविज्ञानं वाग्मिता चेति तद्गुणाः ।
'एता अपि यथौचित्यादुत्तमा मध्यमाऽधमाः' इति दर्पणे ॥

'[1]निसृष्टार्था [2]परिमितार्था [3]पत्रहारी [4]स्वयन्दूती [5]मूढदूती [6]भार्यादूती [7]मूकदूती [8]वातदूती चेति दूतीविशेषाः' इत्यन्यत्र ।

आसां दूत्यः सखी चेटी लिङ्गिनी प्रतिवेशिनी ।
धात्रेयी शिल्पकारी च कुमारी कथिनी तथा ।
[9]कारुर्विप्रश्निका चेति नेतृमित्रगुणान्विताः ॥

इति रसार्णवसुधाकरे ।

'विधवेक्षणिका दासी भिक्षुकी शिल्पकारिका ।
प्रविशत्याशु विश्वासं दूतीकार्यञ्च विन्दति' ॥
'विद्वेषं ग्राहयेत्पत्यौ रमणीयानि वर्णयेत् ।
चित्रान्सुरतसम्भोगानभ्यासानपि दर्शयेत् ॥
नायकस्यानुरागञ्च पुनश्चरति कौशलम् ।
प्रार्थनाञ्चाधिकस्त्रीभिरव[10]ष्टम्भञ्च वर्णयेत् ॥

इति वात्स्यायनीये च । नायिकया दौत्येन प्रहिता स्वयमेव रतिकृत् स्वयन्दूती, दूतीं विना स्वयमेव वाग्वैदग्ध्येन नायकवशीकृद् वाग्विदग्धेति तयोर्भेद इति दिक् ॥

इति रसमञ्जरीसुरभौ नायिकासहायिकानिरूपणम् ॥

---

अथ नायकनिरूपणमवतारयति—

शृङ्गारस्योभयनिरूप्यत्वान्नायकोऽपि निरूप्यते ।

---

१ द्वयोर्भावमुन्नीय सुश्लिष्टकार्यसम्पादिका । २ एकदेशमात्रावगमेन कार्यकृत् । ३ पत्रमात्रस्य सन्देशमात्रस्य वा प्रापिका । ४ दौत्ये प्रहिताऽपि स्वयं रतिकृत् । ५ नायकभार्याभेदादिना स्वेष्टसाधिका । ६ नेतुर्भार्यैवातिवशीभूता दूत्यकरी । ७ अनुक्त्वाऽपि नायिकावशीकारिणी । ८ गूढार्थकद्व्यर्थकवचनादिभिः स्वेष्टसाधिका । ९ तदुक्तम्—'तक्षा च तन्तुवायश्च नापितो रजकस्तथा । पञ्चमश्चर्मकारश्च कारवः शिल्पिनो मताः' इत्येतेषां भार्या दूत्यः, तासामशङ्कं सर्वत्र प्रवेशात् । १० नायिकासङ्गमविषयकनिश्चयम् ॥

नायकनिष्ठरतेरालम्बनतया यथा नायिकानिरूपणमावश्यकम्, तथैव नायिकावृत्तिरतेरालम्बनत्वेन नायकनिरूपणमपीति भावः ।

एतेन शृङ्गारस्य नायिकात्मन्यालम्बने निरूपिते पुनरालम्बनान्तरनिरूपणं विफलमित्याक्षेपो निरस्तः ।

नायकसामान्यलक्षणन्तु—

'त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही ।
दक्षोऽनुरक्तलोकस्तेजोवैदग्ध्यशीलवान्नेता' ॥

इति दर्पणोक्तगुणवत्त्वे सत्यनाहार्याप्रामाण्यज्ञानानास्कन्दितागम्यत्वप्रकारकज्ञानाविषयत्वमेवावगमनीयम् । भेदाः पुनः सामान्येन—

भेदैश्चतुर्धा ललितशान्तोदान्तोद्धतैरयम्' । इति दशरूपके चत्वारः ।

'शृङ्गारी नायकस्त्वन्यः पञ्चमः कथ्यते यथा ।
विलासिवाक्कायशीलः सुभगः स्थिरवाग्युवा' ॥

इति रसरत्नकोशे *पञ्चमोऽपि प्रकारो निर्दिष्टः ।

प्रकृतनायकं विभजते—

स च त्रिविधः—पतिरुपपतिर्वैशिकश्चेति ।

चः समुच्चये । इतिः प्रकारेऽवधारणे वा । स नायकः ।

पूज्यत्वप्रथमोद्देशाभ्यामादौ पतिं निरूपयँल्लक्षयति—

विधिवत्पाणिग्राहकः पतिः ।

पाणिग्रहणसंस्कारकर्तृत्वं पतित्वमित्येव लक्षणम् । विध्यबोधितपाणिग्रहणस्य संस्कारत्वाभावादेव नापत्तिः ।

यत्तु सम्बन्धिभेदात्पाणिग्रहणस्यापि भेदेन पतित्वं नानुगतमिति प्रकाशकृतः, तन्न, सामानाधिकरण्येन पाणिग्रहणसंस्कारकर्तृत्वविशिष्टत्व-पुरुषत्वैतदुभयधर्मावच्छिन्नाधेयतानिरूपिताधिकरणतावत्त्वस्य विवक्षयाऽनुगमस्य स्फुटत्वात् ॥

पतिमुदाहर्तुमभिधत्ते—

पतिः यथा ।

* परे तं ललित एवान्तर्भावयन्ति ॥

पार्वत्याः पथि क्लान्तिमालोक्य महेशश्चन्द्रादीनादिशति—

त्वं पीयूषमयूख ! मुञ्च शिशिरस्निग्धान्सुधाशीकरान्
त्वं भोगीन्द्र ! विलम्बसे किमु फणाभोगैः शनैर्वीजय ।
त्वं स्वर्वाहिनि ! किञ्च सिञ्च सलिलैरङ्गैः शिरीषोपमैः
सेयं शैलसुता कठोरमहसः कान्त्या पथि क्लाम्यति ॥ १०० ॥

हे पीयूषमयूख ! सुधांशो ! त्वं शिशिराश्शीतलाश्च ते स्निग्धा मसृणास्तान् सुधाशीकरान् पीयूषकणान् मुञ्च विसृज पथि वपुषि वा वर्ष। किंच हे भोगीन्द्र सर्पाधीश ! त्वं किमु किं विलम्बसे चिरयसि ? फणाभोगैः फटाविस्तारैः शनैर्मन्दं वीजय व्यजनानिलं कलय। किंच तथा हे स्वर्वाहिनि सुरधुनि ! त्वं सलिलैर्जलैः सिञ्चार्द्रीकुरु। यतः सा सौकुमार्यप्रभावाभ्यां प्रसिद्धा इयं पुरोगा शैलसुता पार्वती पथि मार्गे कठोरमहसस्तीव्रांशोः सूर्यस्य कान्त्या त्विषा आतपेन शिरीषोपमैः कपीतनकुसुमवन्मृदुभिरङ्गैः क्लाम्यति ग्लायतीत्यर्थः। मदुपजीविनां तदुपचार उचित इति भावः ।

तथा च 'शिरीषस्तु कपीतनः' इत्यमरः ।

इह विलम्बस्य कैमर्थ्यमनौचित्यम्, तत् क्लान्तिभूयस्त्वम्; स्वर्वाहिनीपदमूर्ध्वस्थित्या भुवि जलसेककृतियोग्यताम्, चन्द्रादीनां नियोगस्तदधीनताम्, अङ्गानां शिरीषसादृश्यं मृदुत्वम्, तत्पुनः पार्वतीत्वेन सम्भावितकाठिन्याभावम्, हिमशैलात्मत्वं सार्वदिकशीतसम्पर्काभ्यासादीषदुष्णकास्पर्शेऽपि क्लान्त्यौचितीं चावेदयति ।

चन्द्रामृतसेकेन गङ्गासलिलवर्षस्य तु न गतार्थता, तस्याल्पत्वात्। 'शिशिरस्निग्धान्' इति विशेषणसमासो यद्यपि 'गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात्स्यात्' इति मीमांसाऽनुमत्याऽसामर्थ्येन नोचितः, किन्तु 'अयं बाहुः कण्ठे शिशिरमसृणो मौक्तिकसरः' इति भवभूतिप्रयोगानुरोधात्सामर्थ्यं कथंचित्कल्प्यते। वैधपाणिग्रहणन्तु स्फुटं परिचर्यया बीजतयाऽऽक्षेप्यं वा। उपमासंसृष्टः परिकरोऽलङ्कारश्च ॥१००॥

पतिं विभजते—

अनुकूल-दक्षिण-धृष्ट-शठभेदात्पतिश्चतुर्धा ।

तेष्वनुकूलं लक्षयति—

सार्वकालिकपराङ्गनापराङ्मुखत्वे सति सर्वकालमनुरक्तोऽनुकूलः ।

सर्वस्मिन् काले भवं सार्वकालिकम् । पराङ्मुखत्वमननुरागः । सर्वकालमित्यत्यन्तसंयोगे द्वितीया । ततश्च स्वविषयकसार्वदिकानुरागवत्त्वस्वेतरनायिकाननुरक्तत्वाभ्यां नायिकाविशिष्टत्वमनुकूलत्वमाकलनीयम् । तदुक्तं दशरूपके—'अनुकूलस्त्वेकनायिकः' इति ॥

तमुदाहर्तुमाह—

अनुकूलः यथा ।

सीताया वनगमनसौकर्याय रामः पृथ्वीप्रभृतीनभ्यर्थयत्—

पृथ्वि ! त्वं भव कोमला दिनमणे ! त्वं शैत्यमङ्गीकुरु
त्वं वर्त्मन् ! लघुतां प्रयाहि पवन ! त्वं खेदमुत्सारय ।
सान्निध्यं श्रय दण्डकावन ! गिरे ! निर्गच्छ मार्गाद्बहिः
सीताऽसौ विपिनं मया सह यतो निर्गन्तुमुत्कण्ठते ॥ १०१ ॥

हे पृथ्वि वसुधे ! त्वं कोमला मृदुर्भव । तथा हे दिनमणे सूर्य ! त्वं शैत्यं शिशिरताम् अङ्गीकुरु स्वीकुरु । किञ्च हे वर्त्मन् मार्ग ! त्वं लघुतामदीर्घतां प्रयाहि लभस्व । अपिच हे पवन वायो ! त्वं खेदं सीतायाः क्लान्तिम् उत्सारयापनय । एवं हे दण्डकावन दण्डकाख्यराक्षस्याऽधिष्ठितकानन ! यद्वा, दण्डकनृपवन ! यद्वा, दण्डकाया अवनं यत्र तत् ! त्वं सान्निध्यं सन्निकर्षं श्रय धारय । तथा हे गिरे मार्गरोधक शैल ! त्वं मार्गाद्बहिरन्यत्र निश्शेषेण गच्छ । यतः असौ प्रसिद्धमार्दवा सीता जानकी मया रामेण सह विपिनं वनं निर्गन्तुं प्रयातुम् उत्कण्ठते इच्छतितरामित्यर्थः ।

अत्र पृथ्व्याः सीतामातृत्वेऽपि रामस्य तथा प्रार्थना सीतायामन-

न्यसाधारणं प्रणयम्, स त्वनुकूलत्वम्; मणित्वं सहजशोत्याङ्गीकृतिक्षमताम्, स्वसूर्यवंश्यतां, तत्प्रार्थनौचित्यं च व्यनक्ति। समुच्चयोऽलङ्कारश्च ॥ १०१ ॥

दक्षिणं लक्षयति—

सकलनायिकाविषयकसमसहजानुरागो दक्षिणः।

सकलनायिकाविषयकः, समोऽन्यूनानधिकः, सहजोऽकृत्रिमोऽनुरागो यस्य सः। सहजत्वविवक्षया कृत्रिमानुरागस्य शठस्य व्यावृत्तिः।

एवञ्चाशेषनायिकाविषयतुल्याकृत्रिमानुरागवत्त्वं तत्त्वं पर्यवस्यति। तदुक्तं शृङ्गारतिलके—

यो गौरवं भयं प्रेम दाक्षिण्यं पूर्वयोषिति।

न मुञ्चत्यन्यरक्तोऽपि दक्षिणः स स्मृतो यथा ॥ इति।

रसार्णवे तु स्त्रीवत्पुंसोऽप्यनेकत्रानुरागसाम्ये रसाभासत्वम्। दाक्षिण्यं पुनरेकत्रेवानुरक्ततरस्यापि सौजन्येनानेकत्र तुल्यवर्तननिबन्धनमुक्तम् ॥

तमुदाहर्तुमाख्याति—

दक्षिणः यथा।

कथमिमां न पश्यसीति वादिनि सख्यौ श्रीकृष्णचेष्टितं कविराह—

एतत्पुरः स्फुरति पद्मदृशां सहस्र-

मक्षिद्वयं कथय कुत्र निवेशयामि।

इत्याकलय्य नयनाम्बुरुहे निमील्य

रोमाञ्चितेन वपुषा स्थितमच्युतेन ॥ १०२ ॥

हे सखे! एतत्प्रत्यक्षं पद्मदृशां नलिनेक्षणानां नायिकानां न तु रूपरहितानां सहस्रं दशशती, पुरोऽग्रे न त्वन्यत्र, स्फुरति लसति। तत् अक्षिद्वयं नेत्रयुग्मं कुत्र कस्यां निवेशयामि निक्षिपामि इति कथय अच्युतेन कृष्णेन इतीत्थम् आकलय्योक्त्वा नायनाम्बुरुहे दृगब्जे निमील्य सङ्कोच्य रोमाञ्चितेन जातपुलकेन वपुषा उपलक्षितेन स्थितमस्थायीत्यर्थः।

दाक्षिण्यभङ्गाद्विभ्यन्नेत्रे निमील्य रोमाण्येव बहुत्वादुदल्लीलसदित्याशयः।

इह नायिकानां स्फुरणेन पद्ममत्कत्वेन च वह्लवनीयतासौन्दर्यं, ताभ्यामेकत्र दृष्टिनिक्षेपाभावौचित्यम्; दृङ्निमीलनपुलकोल्लासाभ्यां दाक्षिण्यम्, अम्बुरुहत्वेन दृशोरानन्दाश्रुक्लिन्नता च द्योत्यते।

न च नायकनिष्ठरतेरिहानेकव्यक्तिविषयकत्वेनाभासता, 'बहुनायकविषयायाम्' इति भरतानुशासनान्नायिकानिष्ठरतेरेव बहुविषयकत्वे तत्त्वाङ्गीकारात्।

न वा नायिकानिष्ठरतेरुपनायकविषयकत्वेन तत्त्वम्, श्रीकृष्णस्योपनायकत्वाभावात्, परकीयालम्बनकरतेराभासताया असर्वसम्मतेश्च।

नापि तदाऽच्युतकृतनेत्रमुद्रणकारणभावनासत्त्वेन रसस्य विगलितवेद्यान्तरप्रतीतिविरहादाभासता, रसानां तदाकारकान्तःकरणैः विषयान्तराभासशून्यैः सहृदयसामाजिकैरेवास्वाद्यत्वस्य ध्वनिकारादिसम्मतेरनुकार्ये तादृशभावनासत्त्वेऽप्यक्षतेः, निरन्तरतद्भावनाभवनेऽपि प्रमाणाभावाच्चेति प्रकाशकृतां पर्यालोचनम्। रूपकमलङ्कारश्च॥

धृष्टं लक्षयति—

भूयो निश्शङ्ककृतदोषोऽपि भूयो निवारितोऽपि भूयः प्रश्रयपरायणो धृष्टः।

भूयोऽत्यन्तं मुहुर्वा। दोषोऽपराधः। निवारणमागमनभाषणाश्लेषादेः। प्रश्रयोऽनुनयो विनयो वा। तदुक्तम्—

कृतदोषोऽपि निश्शङ्को वारितश्चाप्यवारितः।
धृष्टः स एव सम्प्रोक्तस्त्रपात्यक्तकलेवरः॥

इति कौस्तुभे।

एवञ्चार्तिनिर्भीकत्वे कृतापराधत्वे बहुतरतिरस्कारागणकत्वे च सति भूयोऽनुनयपरत्वं धृष्टत्वं बोध्यम्। प्रथमस्य विशेषणस्याभावे शठे, तृतीयस्याभावे मानिनि च नायकेऽतिव्याप्तिः; विशिष्टाभावस्य विशेष्यविशेषणोभयप्रयोज्यत्वात्। प्रागपराधाविधाने पश्चादनुनयाननुष्ठाने तु स्वरूपहानिः।

तमुदाहर्तुमभिधत्ते—

धृष्टः यथा।

काचन नायकस्य धृष्टतां सहचरीमाचष्टे—

बद्धो हारैः करकमलयोर्द्वारतो वारितोऽपि
स्वापं ज्ञात्वा पुनरुपगतो दूरतो दत्तदृष्टिः।
तल्पोपान्ते कनकवलयं भ्रष्टमन्वेषयन्त्या
दृष्टो धृष्टः, पुनरपि मया पार्श्व एव प्रसुप्तः॥ १०३॥

हे सखि! धृष्टो निर्भीत्रपः नायकोऽपराधं ज्ञात्वा पूर्वम् करकमलयोर्हस्ताब्जयोः हारैर्मुक्तास्रग्भिः बद्धः संयतोऽपि पुनरागच्छन् द्वारतः प्रतिहारदेशात् वारितो रुद्धोऽपि मम स्वापं निद्रां ज्ञात्वाऽवगत्य सम्भाव्य पुनर्दूरतः मच्चेष्टावबोधाय दत्तदृष्टिः कृतेक्षणः उपगतः समीपमायातः भ्रष्टं तादृशस्यापि तस्य वियोगजतानवेन करात् पतितं कनकवलयं तल्पोपान्ते शय्यानिकटे पुनरपि कियत्कालोत्तरं 'नालङ्कृतं स्वप्यात्' इति स्मृत्यनुरोधेन अन्वेषयन्त्या मया पार्श्वं एव न तु तल्पान्तरे क्वापि प्रसुप्तः शयितः दृष्टो विलोकित इत्यर्थः।

तदहो चित्रं तस्य धाष्टर्यं किमाचरामीत्यभिप्रायः।

अत्र मुक्तमिति क्वचित्पाठः। हारबहुत्वं बन्धनस्य दाढर्यम्; बन्धनवारणे नायकाविनयं पुनरागमनानौचित्यं च; तथाप्यागमनं धाष्टर्यप्रकर्षम्; दूरतो दृष्टिदानं जागृतिदशायां पुनर्निवारणशङ्कां च द्योतयति। उक्तनिमित्तविशेषोक्तिरलङ्कारश्च॥ १०३॥

शठं लक्षयति—

कामिनीविषयककपटपटुः शठः।

कृतापराधोऽपि कामिन्या वञ्चने चतुर इत्यर्थः।

तथा च रसार्णवे—'शठो गूढापराधकृत्' इति। स्वप्रतिकूलकारित्व-स्ववञ्चनने पुण्याभ्यां कामिनीविशिष्टत्वं तत्त्वम्।

तमुदाहर्तुमारभते—

शठः यथा।

काचन सकौतुकमालीमालपति—

मौलौ दाम विधाय भालफलके व्यालिख्य पत्रावलीं
केयूरे भुजयोर्निधाय कुचयोर्विन्यस्य मुक्तास्रजम् ।
विश्वासं समुपार्जयन् मृगदृशः काञ्चीनिवेशच्छला-
न्नीवीग्रन्थिमपाकरोति मृदुना हस्तेन वामभ्रुवः ॥ १०४ ॥

कश्चन शठः कपटादुपचरन् मृगदृशः मौलौ शिरसि दाम मालां विधाय विन्यस्य तथा भालफलके ललाटपट्टे पत्रावलीं मकरादिलेखां सिन्दूरलेखां वा व्यालिख्य विरचय्य अपि भुजयोः केयूरे अङ्गदे निधायासज्य किञ्च कुचयोः मुक्तास्रजं हारं विन्यस्य विनिक्षिप्य विश्वासं नान्यथा करिष्यामीति तस्याः विश्रम्भं सम्यगुपार्जयञ्जनयन् काञ्च्या रशनायाः जघने निवेशस्य परिधापनस्य छलात्कपटात् मृदुना कोमलेन हस्तेन शनैः वामभ्रुवः तत्कपटावगमात् कुटिलभ्रुवः नायिकायाः नीवीग्रन्थिं जघनवासोबन्धम् अपाकरोति रिरंसया मोचयतीत्यर्थः ।

इह नायकस्य हस्तमार्दवेन कौशलम् ; प्रसाधनच्छलेनेष्टसाधनप्रवृत्त्या धूर्तता; मृगदृक्पदेन दृक्चाञ्चल्यद्वारा पूर्वं किमयं करोतीत्यवधानदानम् ; वामभ्रूपदेन पश्चाद् व्याजावबोधाद्रोषश्च सूच्यते। अपह्नुतिरलङ्कारश्च ॥ १०४ ॥

अथोपपतिं लक्षयति—

आचारहानिहेतुः पतिरुपपतिः ।

आचारो धर्मानुष्ठानं तद्विनाशहेतुः पतिर्नायक उपपतिर्जार इत्यर्थः। तदुक्तं शिङ्गभूपेन—

लङ्घिताचारया यस्तु विनाऽपि विधिना स्त्रिया ।
सङ्केतं नीयते प्रोक्तो बुधैरुपपतिस्तु सः ॥ इति ॥

लक्षणन्तु स्ववैधपाणिग्रहणाकर्तृत्व स्वोपभोगकर्तृत्व स्वाचारहानिहेतुत्वैर्नायिकाविशिष्टत्वमवसेयम् ।

तमुदाहर्तुमभिधत्ते—

उपपतिः यथा ।

उपपतिरतं कश्चित्तटस्थः कुत्सयते, स्तौति वा—

शङ्काशृङ्खलितेन यत्र नयनप्रान्तेन न प्रेक्ष्यते
केयूरध्वनिभूरिभीतिचकितं नो यत्र वाऽऽश्लिष्यते ।
नो वा यत्र शनैरलग्नदशनं बिम्बाधरः पीयते
नो वा यत्र विधीयते च मणितं तत्किंरतं कामिनोः ॥ १०५ ॥

यत्र यस्मिन् रते शङ्काशृङ्खलितेन लोकदर्शनातङ्कसंयतेन नयनप्रान्तेन कटाक्षेण न प्रेक्ष्यते प्रियाननं न दृश्यते । वा तथा यत्र केयूरध्वनेः भूरिभीतिरतिभयं तया चकितं त्रस्तं यथा भवति तथा नो आश्लिष्यते नैव प्रियजनः आलिङ्ग्यते । वा पुनः यत्र शनैर्मन्दम् अलग्नाः क्षतव्यक्तिशङ्कया अनारोपिताः दशना दन्ता यत्र तद्यथा स्यात्तथा बिम्बाधरो बिम्बोष्ठः न पीयते नो चूष्यते । च किञ्च यत्र मणितं वा केलिकूजितम् अपि जनान्तरश्रवणत्रासात् न विधीयते । तत् कामिनोः कामुक्याः कामुकस्य च किंरतं कुत्सितः केलिः, यद्वा न किमपि तुच्छं, साराहित्यात् । यद्वा किं किमप्यनिर्वचनीयम् आनन्दाधिक्यदानात् इत्यर्थः । तथा च 'मणितं रतिकूजितम्' इत्यमरः ।

अत्र कटाक्षस्य शृङ्खलनमप्रसारद्वारा शङ्कोत्कर्षम्; स पुनराश्लेषाधरपानमणितविधानविरहव्यङ्ग्यैः सह सम्भूय नेतुरौपपत्यम्; कामिनोरित्येकशेषस्तयोर्निरतिशयप्रणयेनैकीभावप्रायत्वं शृङ्गारं च व्यनक्ति ।

यत्तु प्रकृते शङ्काप्रसारेण विगलितवेद्यान्तरत्वाभावान्न रसास्वाद इति केचित् ।

तत्रोच्यते, न खलु कामिनो रसास्वादः, येन तं शङ्का प्रतिबध्नीयात् । किन्तु तत्काव्यार्थभावनया सहृदयानामिति तत्र न किञ्चित्प्रतिबन्धकमिति प्रागप्युक्तम् । काव्यलिङ्गमलङ्कारश्च ॥ १०५ ॥

अनुकूलत्वादिभिरुपपतिमपि विभजितुमाह—

उपपतिरपि चतुर्धा ।

अनुकूलदक्षिणधृष्टशठभेदात् ।

न चास्य परकीयाऽनुरागादनुकूलत्वासम्भवः शङ्क्यः, तल्लक्षणे

स्वीयामात्रस्यानिवेशात्। यद्वा, शठत्वाद्याध्यमन्यदेवात्रानुकूलत्वं कल्प्यम्।

पूर्वतो विशेषं दर्शयति—

परन्तु शठत्वं तत्र नियतम् , अनियताः परे ।

तत्रोपपत्तौ । शठत्वं विना स्वीयां सर्वथा विहाय तथा प्रवृत्तिरेव न स्यात् । परेऽनुकूलत्वादयस्त्रयो धर्माः अनियताः कार्यानुरोधात्कादाचित्काः ।

अथ वैशिकं लक्षयति—

बहुलवेश्योपभोगरसिको वैशिकः ।

वेश्याबहुलोपभोगरसिकत्वमित्येव लक्षणम् । बहुलपदार्थस्य वेश्यान्वयित्वे त्वेकवेश्योपभोक्तर्यव्याप्तिः । एकस्यामपि वेश्यायामत्युपभोगपरेऽपि हि वैशिकत्वं प्रसिद्धम् ।

तमुदाहर्तुमारभते—

वैशिकः यथा—

वेश्यासम्भोगाशंसां काऽपि वर्णयति—

काञ्चीकलक्वणितकोमलनाभिकान्ति
पारावतध्वनितचित्रितकण्ठपालिम् ॥
उद्भ्रान्तलोचनचकोरमनङ्गरङ्ग-
माशास्महे कमपि वारविलासवत्याः ॥ १०६ ॥

विभ्रमवशेन काञ्चीकलक्वणितेन मेखलामधुरशिञ्जितेन कोमलाऽभिरामा नाभेः कान्तिर्लावण्यं यत्र, यद्वा-काञ्च्याः कलं क्वणितं यत्र तथा कोमलस्य मृदोः नाभेः स्फुटलक्ष्यतया कान्तिर्यत्र तम् । तथा पारावतध्वनिविचित्रिता कपोतकलरवसदृशमणितविविधीकृता कण्ठपालिर्गलप्रदेशो यत्र तम्, किञ्च उद्भ्रान्तौ मुखेन्दुचन्द्रिकाकलनेन तरलौ लोचने एव चकोरौ यत्र तादृशं कमप्यपूर्वं वारविलासवत्या वेश्यायाः अनङ्गरङ्गं मदनोत्सवम् आशास्महे अस्माकं भवेदिति वयम् आशंसाम इत्यर्थः । वेश्योपभोगोऽतिसुखद इति भावः ।

अत्र काञ्चीशिञ्जितनाभिकान्त्योर्व्यक्तया कलकण्ठादिध्वनेः सुश्रव-

तया लोचनयोर्भ्रमणेन च लज्जाविसर्जनम्, तेन स्वीयादिसुरतवैलक्षण्यम्, तावता प्रेयस्त्वेनाशंसौचिती च द्योत्यते। काव्यलिङ्गालङ्कारश्च ॥ १०६ ॥

वैशिकं विभजते—

वैशिकस्तूत्तममध्यमाधमभेदात्त्रिधा।

तुनेतरौ व्यवच्छिद्येते।

वस्तुतस्तु पत्युपपत्योरपि ते भेदा इष्यन्ते।

तत्रोत्तमं लक्षयति—

दयिताया भूयः प्रकोपेऽप्युपचारपरायण उत्तमः।

उपचारः शुश्रूषा।

तमुदाहर्तुमाचष्टे—

उत्तमः यथा।

तदाचरणं कश्चिद्वर्णयति—

चक्षुःप्रान्तमुदीक्ष्य पक्ष्मलदृशः शोणारविन्दश्रियं
नोच्चैर्जल्पति, न स्मितं वितनुते, गृह्णाति वीटीं न वा।
तल्पोपान्तमुपेत्य किन्तु पुलकस्फूर्जत्कपोलद्युतिः
कान्तः केवलमानतेन शिरसा मुक्तास्रजं गुम्फति ॥१०७॥

कान्तः पक्ष्मलदृशः सुनेत्रायाः चक्षुषः प्रान्तं प्रदेशं शोणारविन्दश्रियम् अपराधक्रोधजरोषात् रक्तकमलच्छविम् उदीक्ष्यालोक्य उच्चैरशनैः न जल्पति न भाषते। तथा भिया स्मितं न वितनुते। किञ्च वीटीं ताम्बूलं वा न गृह्णाति वा ददाति। किन्तु तल्पोपान्तं शयननिकटम् उपेत्य पुलकैः अनिवारणजन्यानन्दभवैः रोमहर्षैः स्फूर्जन्ती समुल्लसन्ती कपोलयोर्द्युतिर्यस्य सः आनतेन पुना रोषशङ्कया ईषन्नम्रेण शिरसा उपलक्षितः केवलं परं मुक्तास्रजं हारं गुम्फति ग्रथ्नातीत्यर्थः।

इह नायिकानयनशोणद्युत्या रोषः; नायकस्योच्चैर्जल्पनाद्यभावैर्भीतिः, तयाऽपराधः; कपोलद्युतेः स्फारीभावेन हर्षः, तेन च

तल्पान्तोपसरणानिवारणम् ; हारगुम्फनेन शुश्रूषापरत्वं, तेनोत्तमत्वं चावेद्यते । लुप्तोपमालङ्कारश्च ॥ १०७ ॥

मध्यमं लक्षयति—

प्रियायाः प्रकोपमनुरागं वा न प्रकटयति, चेष्टया मनोभावं गृह्णाति स मध्यमः ।

स्वप्रकोपाप्रकाशकत्व-स्वाशयवित्त्वाभ्यां प्रियाविशिष्टत्वं मध्यमत्वम्।

तमुदाहर्तुमाह—

मध्यमः यथा ।

सखा नायकं ब्रूते—

आस्यं यद्यपि हास्यवर्जितमिदं लास्येन वीतं वचो
नेत्रं शोणसरोजकान्ति तदपि क्वापि क्षणं स्थीयताम् ।
मालायाः करणोद्यमो मकरिकारम्भः कुचाम्भोजयो-
र्धूपः कुन्तलधोरणीषु सुदृशः सायन्तनो दृश्यते ॥ १०८ ॥

हे सखे ! यद्यपि अस्याः कोपावेशात् इदं लक्ष्यम् आस्यं वक्त्रं हास्यवर्जितं हासहीनम् अस्ति । तथा वचो वाक्यं लास्येन गीतादिविच्छित्तिविशेषेण वीतं विरहितम् अस्ति । किञ्च नेत्रं शोणसरोजकान्ति कोकनदद्युति अस्ति । तदपि भवता क्वापि नायिकाऽदृश्यस्थले क्षणं किञ्चित्कालं स्थीयताम् । यतोऽस्याः सुदृशः सायन्तनः मालायाः करणोद्यमः स्रजो रचनोद्योगः दृश्यते । तथा कुचाम्भोजयोः स्तनाब्जयोः सायन्तनः मकरिकारम्भः पत्रलेखोपक्रमः दृश्यते । तथा कुन्तलधोरणीषु केशपाशेषु सायन्तनः प्रदोषकालिकः धूपः सुरभिधूमाधिवासः दृश्यते इत्यर्थः ।

रोषचिह्नानि वीक्ष्यैव नापसरणीयम्, सुरतसामग्रीसङ्कलनया कदाचिदाह्वानमपि सम्भाव्यत इत्याकूतम् ।

इह मुखादीनां हास्यादिशून्यतया रोषः, मालाविधानाद्युद्यमेन सम्बुभुत्सा; तयोरवगमेन नायिकाशयवित्त्वान्मध्यमत्वं च प्रतीयते ।

नायकावगतमेव सुहृद्भावं सखाऽनूक्तवानिति न नेतुर्मध्यमत्व-व्याघातः। लुप्तोपमा निदर्शना चाऽलङ्कारश्च ॥ १०८ ॥

अधमं लक्षयति—

भयलज्जाकृपाशून्यः कामक्रीडायामकृतकृत्याकृत्यविचारोऽधमः।

नायिकातो भयम्, दुराचाराल्लज्जा, विश्रब्धाया वञ्चने कृपा। तच्छू-न्यत्वे सति सम्भोगीयकर्तव्याकर्तव्यविवेकहीनत्वमधमत्वम्।

तमुदाहर्तुमभिधत्ते—

अधमः यथा।

नायिका सखीमुपालभते—

उदयति हृदि यस्य नैव लज्जा,
न च करुणा, न च कोऽपि भीतिलेशः।
वकुलमुकुलकोशकोमलां मां
पुनरपि तस्य करे न यातयेथाः ॥ १०९ ॥

हे सखि! यस्य हृदि चित्ते लज्जा नैव उदयति उद्भवति का कथा तत्स्थितेः? च पुनः करुणा कृपा न उदयति। च तथा कोऽपि द्रागपि भीतिलेशस्त्रासलवः न उदयति। वकुलमुकुलकोशवत् केसरकुड्मलमध्यवत् कोमलां मृदुलां मां तस्य अधमस्य करे निधाय वशे निक्षिप्य पुनरपि भूयोऽपि न यातयेथा अतिपीडयेथा इत्यर्थः। अधमः स क्रीडायामप्यधिकं पीडयतीति भावः।

तथा च 'दया च करुणा घृणा' इति हलायुधः, 'कुड्मले मुकुलः' इति हैमः, 'यातना तीव्रवेदना' इत्यमरश्च।

अत्र नेतुर्लज्जादिशून्यत्वेनाधमत्वम्; स्वसुकुमारतया यातनाऽसहनौचिती; यातनात्वेन पीडोत्कर्षश्च व्यज्यते। उदयतीति 'कटी' इत्यत्र प्रश्लिष्टस्य रूपम्। अत एव 'उदयति विततोर्ध्वरश्मिरज्जौ' इति माघः प्रायुङ्क्त। भीतिलेशस्यापीषत्त्वविवक्षया न कोऽपीत्यनेन पुनरुक्तिः। काव्यलिङ्गसंसृष्ट उपमालङ्कारश्च ॥ १०९ ॥

मानिचतुरयोः पृथगनिरूपणहेतुमाह—

मानी चतुरश्च शठ एवान्तर्भवति ।

अयोगव्यवच्छेदार्थक एवकार इह भिन्नक्रमः। तेन मानिचतुरौ शठेऽन्तर्भवत एव न तु भिन्नावित्यर्थः। तावता दक्षिणादेरपि मानित्वाद्युपलब्धेः शठमात्रस्य तत्त्वाभ्युपगमोऽसमञ्जस इत्याक्षेपो निरस्तः। शठपदमेवानुकूलेतरेषु लाक्षणिकमिति केचित्।

तत्र मानिनमुदाहर्तुमभिधत्ते—

मानी यथा ।

दृष्टतच्चरिता काचिदाह—

बाह्याकूतपरायणं तव वचो वज्रोपमेयं मनः<br>
श्रुत्वा वाचमिमामपास्य विनयं व्याजाद्ब‍हिः प्रस्थिते ।<br>
प्रातर्वीतविलोकने परिहृतालापे विवृत्तानने<br>
प्राणेशे निपतन्ति हन्त कृपणा वामभ्रुवो दृष्टयः ॥ ११० ॥

अयि शठ! तव वचः बाह्यं बहिर्भवं न त्वाभ्यन्तरं यदाकूतमभिप्रायः तत्र परायणं निरतं कृत्रिमानुनयपरं विद्यते। मनो हृदयं पुनः वज्रोपमेयं काठिन्येन अशनिसदृशम् अस्ति। इमामीदृशीं प्रेयस्या वाचं गिरं श्रुत्वा विनयं प्रश्रयं तदनुनयं वा रोषात् अपास्य विहाय व्याजादतिझटिति विधेयकार्य्यान्तरव्यपदेशात् बहिरन्यत्र प्रातः प्रभाते प्रस्थिते प्रयाते प्रयातुमुद्यते तथा वीतं त्यक्तं विलोकनं तस्या दर्शनं येन तादृशे तथा परिहृतो मुक्तः आलापो भाषणं येन तस्मिन् तथा विवृत्तं विवलितम् आननं येन तथाभूते प्राणेशे जीवितेश्वरे वामभ्रुवः तस्या वियोगज्वरभयात् कृपणा दीनाः दृष्टयः हन्त, निपतन्तीत्यर्थः।

कोमलतमे हि योषितां हृदि भावाः सत्वरमेव परिवर्तन्ते। मानिनो हि द्रागपि पराक्षेपवचो न सहन्त इति भावः।

अत्र वचसो बाह्याकूतपरत्वेन मनसोऽन्यविधत्वं वचोऽनुरूपक्रियाऽभावश्च, ताभ्यां शाठ्यम्; मनसः कुलिशसादृश्येन कार्कश्यम्, तेन तदर्थमेव दुःखितजनस्याननुकम्पित्वम्; प्राचीनवचनादेतद्वचन-

स्याप्यलोकत्वम्; व्याजेन शठता; बहिःप्रस्थानादिभी रोषः, तेन मानिता; प्राणेशत्वेन दृष्टिदानौचित्यम्; दृष्टिकार्पण्येन खेदो वियोगात्त्रासो वा; निपतनेन दृष्टीनामनिवार्यता, तथा दैन्यमौत्सुक्यं च सूच्यते। काव्यलिङ्गपरिकरावलङ्कारौ च ॥ ११० ॥

चतुरस्य द्वैविध्यप्रदर्शनगर्भं लक्षणं दर्शयति—

वचन–चेष्टाव्यङ्ग्यसमागमश्चतुरः ।

वचन–व्यापारविशेषान्यतरद्योत्यसमागमत्वं चतुरत्वम् ।

तत्र प्रथमप्रकारमुदाहर्तुमाचष्टे—

वचनव्यङ्ग्यसमागमो यथा ।

वाक्चतुरः कांचिद्वक्ति—

तमोजटाले हरिदन्तराले काले निशायास्तव निर्गतायाः ।
तटे नदीनां निकटे वनानां घटेत शातोदरि! कः सहायः ॥१११॥

हे शातोदरि क्षीणमध्ये! निशायाः काले रात्रिसमये हरिदन्तराले दिगभ्यन्तरे तमांस्येव द्राघिम्नः जटाश्शटाः तास्सन्त्यस्मिन्निति तमोजटाले तिमिरसङ्कावृते सति निर्गतायाः गृहात् निःसृताया एकाकिन्याः तव नदीनां सरितां तटे तीरे वनानामरण्यानां निकटे सन्निधौ कः कतमः सहायः सहचरो रक्षको वा घटेत भवेदित्यर्थः।

अत्र 'प्राणिस्थादातो लजन्यतरस्याम्' इत्यनेन लज् मत्वर्थे। तिमिराधिक्यप्रतीतये जटाल इत्युपचारः। सम्बोधनं सौन्दर्यविशेषद्वारा स्वप्रणयौचित्यम्, तस्याः स्वत आपत्प्रतीकाराक्षमत्वं च; निशाकालिकवननदीसान्निध्यं भीमताम्, सा जनसञ्चारशून्यत्वम्, तन्निश्शङ्ककेलियोग्यताम्; समस्तवाक्यं पुनर्व्यक्त्यन्तरामिलनादहमेवास्मि सहायस्तन्मयैव सह रमस्वेति द्योतयति। रूपकानुप्रासावलङ्कारौ च ॥

द्वितीयमुदाहर्तुमाख्याति—

चेष्टाव्यङ्ग्यसमागमो यथा ।

काचित्कौतुकेन कथयति—

कान्ते कनकजम्बीरं करे किमपि कुर्वति ।

आगारलिखिते भानौ बिन्दुमिन्दुमुखी ददौ ॥ ११२ ॥

कान्ते प्रिये कनकजम्बीरं हैमजम्भफलं किमपि विलक्षणं यदृच्छया वा करे कुर्वति धारयति सति इन्दुमुखी शशिवदना आगारलिखिते गृहभित्तिविन्यस्ते भानौ दिवाकरे बिन्दुं विप्रुषं शून्यचिह्नं ददावारोपयत् लिलेख इत्यर्थः।

सूर्यास्तङ्गमनानन्तरमागन्तव्यमित्याशयः।

तथा च 'जम्बीरे जम्भजम्भलौ' इति हैमः, 'बिन्दुर्वेदितृविप्रुषोः' इति शाश्वतश्च।

अत्र स्वस्वत्वनिवृत्त्याद्यविवक्षया ददातेर्योगे न चतुर्थी। जम्बीरस्य करस्थापना एवं त्वत्कुचस्पर्शं कदा लभेयेति प्रश्नम्; किमपीति विलक्षणानन्ददानं यादृच्छिकत्वेन गोपनं वा; कुर्वतीति शता प्रश्नसमकालमेवोत्तरदानद्वारा नायिकाप्रतिभाविशेषम्; भानौ बिन्दुदानं तदस्तङ्गमनमुखेन, यद्वा लाञ्छनसत्त्वेन चन्द्रोदयमेव सङ्केतकालं सूचयति।

सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥

इतिवद् गुणीभूतव्यङ्ग्यत्वं तु नाशङ्क्यं, व्यङ्ग्यस्य वाच्यानुपस्कारित्वात्। तत्र त्वाकूतपदमाहात्म्येन गुणीभावः। सूक्ष्मालङ्कारः। पथ्यावक्त्रं छन्दश्च ॥ ११२ ॥

अथ प्रोषितत्वेन पुनः पत्यादीन् विभजते—

प्रोषितः पतिरुपपतिर्वैशिकश्च भवति।

समुच्चयार्थश्चकार उपपतिवैशिकयोरप्रसिद्धं प्रोषितत्वं गमयति।

स्पष्टप्रतिपत्तये तान्निर्दिशति—

प्रोषितपतिः, प्रोषितोपपतिः, प्रोषितवैशिकश्चेति त्रयः।

प्रकारा इति शेषः।

तानेकैकशः पर्यायेणोदाहर्तुमुपक्रमते—

क्रमेणोदाहरणानि।

कोऽपि प्रोषितः पतिर्वदति—

ऊरू रम्भा, दृगपि कमलं, शैवलं केशपाशो,

वक्त्रं चन्द्रो, लपितममृतं, मध्यदेशो मृणालम् ।
नाभिः कूपो, वलिरपि सरित्, पल्लवः किञ्च पाणि-
र्यस्याः सा चेदुरसि, न कथं हन्त तापस्य शान्तिः ॥११३॥

यस्याः प्रेयस्याः ऊरू जङ्घे रम्भा कदली, अपि तथा दृक् नेत्रं कमलं किञ्च केशपाशो धम्मिल्लः शैवलं जलनीली तथा वक्त्रं मुखं चन्द्रः किञ्च लपितं वचनम् अमृतम् अपि च मध्यदेशोऽवलग्नः कार्श्येन मृणालं बिसं तथा नाभिः कूपो विदारकः अपि तथा वलिर्मध्यमरेखा दैर्घ्यात् सरित् किञ्च तथा पाणिः करः पल्लवः किसलयम् अस्ति। सा चेद्यदि मम उरसि हृदये विद्यते, तथापि हन्त खेदः, कथं तापस्य संज्वरस्य शान्तिर्निवृत्तिः न भवति इत्यर्थः।

यद्वा हन्तेति हर्षे, न कथं तापस्य शान्तिः, अपि तु स्यादेवेत्यर्थः। तथा च 'स्याद्मध्यावलग्नयोर्मध्यम्' इति रभसः, 'वलिर्मध्यमरेखा-मिंजीर्णत्वग्गृहदारुषु' इति वैजयन्ती च।

इह जङ्घादीनां कदलीत्वाद्यध्यासेन शिशिरतमत्वम्, तेन शमनौचिती; मध्यमृणालत्वेन कार्श्यम्; नाभेः कूपत्वेन गाम्भीर्यम्, तेन 'नारीणां नाभिगाम्भीर्यान्मदनातिरेकः' इति वात्स्यायनानुशिष्टः कामोद्रेकः; वलेः सरित्त्वेनायतत्वम्; वचसोऽमृतत्वेन माधुर्यदौर्लभ्ये, ततः कुलाङ्गनात्वम्, तत आत्मनः पतित्वम्; सन्तापेन प्रोषितत्वं च प्रतीयते। अतिशयोक्तिसमुच्चयावलङ्कारौ च ॥ ११३ ॥

प्रोषित उपपतिराह, स्वयं विमृशति वा—

यान्त्याः सरः सलिलकेलिकुतूहलाय
व्याजादुपेत्य मयि वर्त्मनि वर्तमाने ।
अन्तःस्मितद्युति चमत्कृतदृक्तरङ्ग-
रङ्गीकृतं किमपि वामदृशः स्मरामि ॥ ११४ ॥

सलिलकेलिकुतूहलाय जलक्रीडाकौतुकार्थं सरस्तडागं यान्त्याः गच्छन्त्याः वामदृशः सुनेत्रायाः वर्त्मनि पथि व्याजात्कपटात् उपेत्यागत्य मयि वर्तमाने, यद्वा वामदृशमुपेत्य वर्तमाने सति, यद्वा वर्त-

माने मयि अन्तरभ्यन्तरे स्मितस्य द्युतिर्यत्र तद्यथा भवति तथा, यद्वा तथा चमत्कृतहृत्करङ्कैर्विच्छित्तिशालिकटाक्षनिक्षेपैः किमप्यनिर्वचनीयं केनचित्प्रकारेण वा अङ्गीकृतं मत्प्रार्थितस्य स्वीकृतं तस्याः सङ्केतचेष्टितं स्मरामि चिन्तयामीत्यर्थः।

यद्वा सखे। यान्त्या वामदृशः व्याजान्मामुपेत्याङ्गीकृतं स्मरामीत्यन्वयः। अतिरमणीयं तदित्याशयः।

इह स्मरणेन प्रोषितत्वम्; व्याजेनोपपतित्वम्; किमपीत्यनेन मञ्जुलतमत्वञ्च ध्वन्यते।

स्मृतेः साक्षाच्छब्देनोपस्थित्या न भावता, सादृश्यानुद्भावितत्वाच्च नालङ्कारत्वम्। किन्तु काव्यलिङ्गमलङ्कारश्च॥ ११४॥

प्रोषितो वैशिको वक्ति—

अधृतपरिपतन्निचोलबन्धं मुषितनकारमवक्रदृष्टिपातम्।
प्रकटहसितमुन्नतास्यबिम्बं पुरसुदृशः स्मरचेष्टितं स्मरामि॥

अधृतोऽनालम्बितः अत एव परिपतन्नवस्रंसमानः निचोलबन्ध उत्तरीयग्रन्थिर्यत्र तथा मुषितश्चोरितः लुप्तः नकारो नशब्दो यत्र तथा अवक्रोऽकुटिलः दृष्टेः पातो निक्षेपो यत्र तथा प्रकटं स्फुटं हसितं यत्र तथा उन्नतम् ऊर्ध्वस्थितम् आस्यबिम्बं मुखमण्डलं च यत्र तादृशं पुरसुदृशो वेश्यायाः स्मरचेष्टितं मन्मथविजृम्भितं स्मरामि भावयामीत्यर्थः।

इह स्मरचेष्टितविशेषणैस्त्रपाऽभावः, तेन स्वीयादिवैलक्षण्यात्कमनीयतया स्मरणौचिती; मोषेण नकारस्य नितरामभावः; विलोकनस्य सारल्येन प्रसादः; हसितव्यक्त्यौष्ठ्यग्रहणौम्यम्, तेन पूर्ववत्, स्मरणेन प्रोषितत्वं च द्योत्यते। काव्यलिङ्गमलङ्कारश्च॥ ११५॥

नायकाभासस्यापि भोजादिभिर्नायकभेदे, परिगणनादाह—

अनभिज्ञो नायको नायकाभास एव।

अनभिज्ञः साङ्केतिकचेष्टाज्ञानशून्यः नायकवदाभासत इति नायकाभासो गौणनायकः। एवकारो मुख्यनायकत्वं व्यावर्तयति।

तथा च मन्दारमरन्दे—

'नायकस्य गुणैर्हीनो नेतात्वाभासनायकः' । इति ।

तमुदाहर्तुमाख्याति—

नायकाभासः यथा ।

नायिका सखेदं दूतीं कथयति—

शून्ये सद्मनि योजिता बहुविधा भङ्गी वनं निर्जनं
पुष्पव्याजमुपेत्य निर्गतमथ स्फारीकृता दृष्टयः ।
ताम्बूलाहरणच्छलेन विहितौ व्यक्तौ च वक्षोरुहा-
वेतेनापि न वेत्ति दूति ! कियता यत्नेन स ज्ञास्यति ॥११६॥

अयि दूति ! मया नायकविजिहीर्षोज्जृम्भणाय शून्ये रिक्ते सद्मनि गृहे रहसि बहुविधा नैकरूपा भङ्गी विशेषः योजिता विहिता । तथा पुष्पव्याजं कुसुमचयनकपटम् उपेत्याभ्युपगम्य निर्जनं लोकसञ्चारहीनं वनं निर्गतम् । अथ तदनन्तरं दृष्टयः स्फारीकृताः सहजलज्जयाऽव्यक्ता अपि व्यक्ततां नीताः । च पुनः ताम्बूलस्य आहरणच्छलेन ग्रहणकपटेन वक्षोरुहौ कुचौ व्यक्तौ प्रकटितौ । एतेनानेन विभ्रमेण अपि यदि सोऽनभिज्ञनायकः मदाशयं न वेत्ति नैव जानाति, तदा कियता यत्नेनोद्यमेन ज्ञास्यति वेदिष्यतीत्यर्थः ।

मूढोऽयं न किञ्चिद्वेत्तीत्यन्यो विदग्ध आनीयतामित्याकूतम् ।

अत्र नायकनामानुल्लेखेन खेदः; अपिना तज्ज्ञापकप्रकारान्तरासम्भवः, समस्तवाचा विदग्धनायकानयनप्रेरणा च व्यज्यते । समुच्चयोपस्कृता विशेषोक्तिरलङ्कारश्च ॥ ११६ ॥

नायिकावन्नायकस्याप्यवस्थाकृतान्प्रकारानाशङ्क्य खण्डयति—

नच नायिकाया इव नायकस्यापि ते ते भेदाः सन्त्विति वाच्यम्,

ते प्रोषितपत्नीकत्वादयोऽष्टौ भेदाः ।

खण्डनहेतुमाह—

तस्या अवस्थाभेदेन भेदः, तस्य च स्वभावेन भेद इति विशेषात् ।

चस्त्वर्थकः। नायिकाया दशाभेदप्रयोज्यो भेदः, नायकस्य तु नैसर्गिकधर्म्मदाक्षिण्यादियोगेनैव भेद इति विशेषो वैजात्यमिति दृष्टान्त-दार्ष्टान्तिकयोर्वैषम्यात्पूर्वोक्तं न वाच्यमित्यर्थः।

प्रकृतोपयोगितया स्वाभाविकधर्मान् पुनः स्मारयति—

अनुकूलत्वं दक्षिणत्वं धृष्टत्वं शठत्वमिति चत्वार एव नायकस्य स्वभावा इति।

एवशब्दोऽवस्थाकृतधर्मयोगव्यवच्छेदार्थकः। इतिः प्रकारे। स्वभावास्तदेकमात्रवृत्तयो धर्माः।

तथाऽनभ्युपपत्तावापत्तिं दर्शयति—

अन्यच्चावस्थाभेदेन भेदो यदि नायकस्य स्यात्, तदोत्क-विप्रलब्ध-खण्डितादयो नायका अपि स्वीकर्तव्याः।

उत्कत्वादेरवस्थाप्रयोज्यत्वात्।

ननु ते भेदाः स्वीक्रियन्तां का क्षतिः? तत्राह—

तथा च सङ्केतव्यवस्थायां स्त्रीणां गमने वा, सम्प्रदायादन्यसमागमशङ्का धूर्तत्वं वाऽन्यसम्भोगचिह्नितत्वं वा नायकानाम्, न तु नायिकानाम्।

सम्प्रदायो गुरुपरम्परोपदेशः तस्मात्, सङ्केतस्य विगताऽवस्था व्यवस्था कालातिक्रमः तस्यां सत्याम् अन्यसम्भोगशङ्का नायिकान्तरसम्भोगसम्भावना वा तथा स्त्रीणामितराङ्गनानां गमने सम्भोगे धूर्तत्वं शठत्वं वा तथाऽन्यसम्भोगचिह्नितत्वं नायकानामेव, न तु नायिकानामित्यन्वयः।

सम्प्रदाये बीजं प्रकटयति—

तान् प्रति तदुद्भावने रसाभासापत्तिरिति।

तान्नायकान् प्रति तदुद्भावने तेषु तद्धर्मकल्पने अनौचित्याद्रसाभास आपद्येतेत्यर्थः।

इदमिहावगन्तव्यम्, न हि कोऽपि सहृदयोऽन्यसम्भोगचिह्नितनायिकादर्शनखिन्नस्य प्रागुपनतां नायिकामवमत्यानुशयानस्य नायि-

कया सङ्केते वञ्चितस्य सङ्केते नायिकानागमेऽन्यनायकसङ्गमं सन्दिहानस्य वा नायकस्य वर्णनमास्वाद्यं मन्यते, अनौचित्येन रसभङ्गादिति नैव नायकस्य खण्डित-कलहान्तरित-विप्रलब्धो-त्कत्वानि। नायिकायाः प्रवासः, नेतुः सुरतसामग्रीसज्जनञ्च न चमत्कारकारणमिति नैव प्रोषितपत्नीक-वासकसज्जत्वे। पत्न्याः परयधीनत्वमापामरमतिक्षुण्णमिति विच्छित्तिविरहान्न स्वाधीनपत्नीकत्वम्। अभिसरणमतिप्रसिद्ध्या, वात्स्यायनीयेश्वरकामितप्रकरणानुशिष्टाभिसारणं प्रणयाभावेन चारमणीये इति नाप्यभिसारकत्वम्। एतेन कस्यचिद्भेदस्याङ्गीकारं वदन्तः परास्ताः।

एवञ्च पत्युरुपपतेश्चानुकूलत्वादिभिरष्टौ भेदाः, वैशिकस्योत्तमत्वादिभिस्त्रयः, नायकाभासश्चैक इति द्वादशनायकस्य भेदा भवन्ति।

वस्तुतस्तूत्तमत्वादिभिः पत्युपपत्योरपि भेदाङ्गीकारेणाष्टाविंशतिर्भेदाः, तेषां भोजराजानुमतैः सात्त्विकराजसतामसत्वैर्भेदे षडशीतिः, तदनुमतैरुपनायकानुनायकप्रतिनायकैर्योगे त्वेकोननवतिः प्रकाराः सम्पद्यन्ते।

अन्ये तु—

निश्चिन्तो धीरललितः कलासक्तः सुखी मृदुः।
सामान्यगुणयुक्तस्तु धीरशान्तो द्विजादिकः॥ इति दशरूपके।
कृपावानतिगम्भीरो विनीतश्चाविकत्थनः।
धीरोदात्तः स विज्ञेयो रामो दाशरथिर्यथा॥
मात्सर्यदर्पभूयिष्ठश्छद्मयहङ्कारवान् बली।
चण्डो विकत्थनश्चैव धीरोद्धत उदाहृतः॥

इति रसरत्नकोशे च लक्षिता ललितत्वादिभिरादौ चत्वारो भेदाः, तेषामनुकूलत्वादिभिः षोडश, तेषामप्युत्तमत्वादिभिरष्टचत्वारिंशद्भेदाः, तेषां च दिव्यत्वादिभिश्चतुश्चत्वारिंशदधिकशतम्, तेषां पुनश्शशवृषमृगहस्तित्वैः ५७६ षट्सप्तत्यधिकपञ्चशती, ततः कफिवातुलपित्तलत्वैः १७२८ अष्टाविंशत्यधिकसप्तदशशतं भेदा भवन्तीति ब्रुवन्ति। तत्र विस्तरभयात्प्रकृतानुपयोगिनो भेदा इहोपेक्षिताः॥

इति रसमञ्जरीसुरभौ नायकनिरूपणम्।

अथ नायकशृङ्गारसहायानाह—

तेषां नर्मसचिवः पीठमर्द-विट-चेटक-विदूषकभेदाच्चतुर्धा।

तेषां नायकानाम्। नर्मणि क्रीडायां कुपितस्त्रीप्रसादने सचिवः सहायः प्रधानं वा।

तथा च "पीठमर्दो विदूषकः। विटचेटौ' इति भोजराजः।

परे तु—

पीठमर्दो विटश्चैव विदूषक इति त्रिधा।

इत्युक्त्वा चेटं विट एवान्तर्भावयन्ति।

तत्र प्राथम्यात्पीठमर्दं लक्षयति—

कुपितस्त्रीप्रसादकः पीठमर्दः।

मानिन्याश्चाटुकारैः प्रसन्नताकारक इत्यर्थः।

तदुक्तं दशरूपके—

'पीठमर्दो विचक्षणः। तस्यैवानुचरो भक्तः किञ्चिदूनश्च तद्गुणैः' इति।

तमुदाहर्तुमाख्याति—

पीठमर्दो यथा।

पीठमर्दो मानिनीं प्रसादयितुमालपति—

कोऽयं कोपविधिः? प्रयच्छ करुणागर्भं वचो, जायतां
पीयूषद्रवदीर्घिकापरिमलैरामोदिनी मेदिनी।
आस्तां वा स्पृहयालुलोचनमिदं व्यावर्तयन्ती मुहु-
र्यस्मै कुप्यसि तस्य सुन्दरि! तपोवृन्दानि वन्दामहे॥११७॥

अयि सुन्दरि सुभगे! अयमीदृशः ते कोपविधिर्मानविधानम् कः? नोचितः। किन्तु करुणा प्रिये दया गर्भे मध्ये यस्य तादृशं वचः 'नैव त्वागः, तम् आनय' इत्यादिवचनं प्रयच्छ वितर। तावता मेदिनी मही पीयूषद्रवदीर्घिकायाः त्वद्वाक्यसुधारसवाप्याः परिमलैरतिसौरभैः हेतुभिः आमोदिनी सौरभोत्कर्षवती प्रमोदवती वा जायतां भवतु। वा अथवा आस्ताम् वाग्वितरणप्रार्थना तिष्ठतु, किन्तु त्वं स्पृहयालु

दयितं दिदृक्षु इदं प्रत्यक्षं लोचनं स्वीयं नेत्रं मुहुः असकृत् व्यावर्तयन्ती घूर्णयन्ती यस्मै नायकाय कुप्यसि क्रुध्यसि तस्य तपोवृन्दानि तपस्याराशीन् वन्दामहे स्तुम इत्यर्थः।

तव कोपोऽपि नायकस्य पुण्येनैव भवतीत्यभिप्रायः।

तथा च 'वापी तु दीर्घिका' इत्यमरः।

इह लोचनस्य सस्पृहत्वेन शीघ्रप्रसादसम्भवः; चतुर्थ्या कोपोद्देश्यतया नायकस्य पुण्यवत्ता; तपोवृन्दस्य बहुत्ववन्दनाभ्यां तत्फलस्य नायिकाकोपस्य दौर्लभ्यम्; चाटुकारेण पीठमर्दस्य चातुरी च सूच्यते। अतिशयोक्तिरलङ्कारश्च ॥ ११७ ॥

विटं लक्षयति—

कामतन्त्रकलाकोविदो विटः।

कामस्य तन्त्रे शास्त्रे कलासु गीतादौ च कोविदो निपुणः। नायकयोः सन्देशं विटति मिथो वदतीति विटः, विटेः शब्दार्थत्वादिति यशोधरः। तदुक्तं दर्पणे—

सम्भोगहीनसम्पद्विटस्तु धूर्तः कलैकदेशज्ञः।

वेशोपचारकुशलो वाग्मी मधुरोऽथ बहुमतो गोष्ठ्याम्॥ इति।

तमुदाहर्तुमाह—

विटो यथा।

विटो मानिनीं प्रसादयितुं वदति—

आयातः कुमुदेश्वरो, विजयते सर्वेश्वरो मारुतो,

भृङ्गः स्फूर्जति भैरवो न निकटं प्राणेश्वरो मुञ्चति।

एते सिद्धरसाः प्रसूनविशिखो वैद्योऽनवद्योत्सवो

मानव्याधिरसौ कृशोदरि! कथं त्वच्चेतसि स्थास्यति ॥११८॥

हे कृशोदरि! कुमुदेश्वरः शशी तदाख्यरसश्च आयातः उदितः उपस्थितश्च। किञ्च सर्वेषां प्राणरूपतया ईश्वरः मारुतः तन्नामकरसश्च विजयते सर्वोत्कर्षेण विद्यते। तथा भैरवो भीषणः भृङ्गः तन्नामा रसश्च स्फूर्जति समुल्लसति। तथा प्राणेश्वरो दयितः तदभिधरसश्च

निकटं सन्निधिं न मुञ्चति नैव जहाति । एवञ्च एते कुमुदेश्वरादयः सिद्धो निष्पन्नो रसः शृङ्गारो यैस्ते उद्दीपकाः सिद्धा व्याधिविघाते प्रसिद्धा रसा ओषधिविशेषाश्च सन्ति । तथा अनवद्यो निर्दोषः 'उत्सवो यतो यस्य वा तादृशः प्रसूनविशिखः कामः वैद्यो भिषक् यतोऽस्ति, ततः त्वच्चेतसि तव मानसे असौ विदितः मान एव व्याधिः स कथं स्थास्यति न कथमपि इत्यर्थः ।

कुमुदेश्वरादयो रसा रसरत्नसमुच्चयादौ निरूपिताः ।

हेत्वन्तरैर्मानभङ्गेऽवश्यम्भाविनि स्वयमेव प्रसादो विधेय इत्युचितमिति भावः ।

अत्र कुमुदेश्वरादिपदोपस्थापितानां चन्द्रादीनां निहतत्वेऽपि श्लेषच्छायानुग्रहान्न क्षतिः । कृशोदरीति सम्बोधनेन व्याधिकदनासहिष्णुता सौन्दर्य्यं; कुमुदेश्वरपदेन चन्द्रस्य कान्तिशालितयोद्दीपनत्वम्, तेन मानस्थित्यसम्भवः; भैरवपदेन वियोगिपीडनम्; भिषजोऽनवद्योत्सवत्वेन पीयूषपाणिता, तया व्याधिस्थित्यसम्भव एव; माने व्याधितादात्म्येन सन्तापकत्वदुष्परिणामत्वे; उक्तिचातुर्येण स्वस्य नायकोपकारकत्वं च प्रतीयते । रूपकसंसृष्टसमुच्चयालङ्कारश्च ॥ ११८ ॥

चेटं लक्षयति—

सन्धानचतुरश्चेटकः ।

सन्धानं यूनोर्मिथस्सङ्गमनम् ।

तमुदाहर्तुमाह—

चेटो यथा ।

कोऽप्याचष्टे—

सा चन्द्रसुन्दरमुखी स च नन्दसूनु-
र्दैवान्निकुञ्जभवनं समुपाजगाम ।
अत्रान्तरे सहचरस्तरणौ कठोरे
पानीयपानकपटेन सरः प्रतस्थे ॥ ११९ ॥

यदा सा प्रसिद्धसौभगा चन्द्रसुन्दरमुखी विधुसुभगवक्त्रा

श्रीराधा च पुनः स प्रसिद्धरूपः नन्दस्य सूनुः सुतः श्रीकृष्णः दैवात् अनुकूलविधेः अकस्मात् निकुञ्जभवनं लतागृहं समुपाजगाम समाययौ। अत्रान्तरे एतन्मध्ये तरणौ भास्वति कठोरे तीव्रे सति सहचरः श्रीकृष्णस्य सखा पानीयपानस्य कपटेन तृषाकुलोऽहं जलं पातुं गच्छामीति व्याजेन सरस्तडागं प्रतस्थे प्रययावित्यर्थः।

तत्सन्निधौ सङ्गतयोरपि स्वच्छन्दकेलिर्न स्यादित्याशयः।

इह सहचर इत्यत्र पचाद्यच्। दैवकृतत्वेन समागमस्य प्रेष्ठताः; चेटस्य निस्सरणेन स्वरूपम्; सूर्यस्य तीव्रतया निकुञ्जे जनराहित्यम्, चेटस्य पिपासासम्भवश्च; सहचरपदेन सदा सान्निध्यौचित्येऽपि निस्सरणेन सन्धानचातुरी; कपटेन अपसरणहेतुस्पष्टोक्तौ तयोस्त्रपया विश्लेषसम्भवः; प्रस्थानेन सरसो विप्रकर्षः, तेन केलिस्थेमा च व्यज्यते। काव्यलिङ्गमुपमारूपकाभ्यां संसृज्यते च ॥ ११९ ॥

विदूषकं लक्षयति—

अङ्गादिवैकृत्यैर्हास्यकारी विदूषकः।

आदिशब्देन क्रियावेषभाषा गृह्यन्ते। वैकृत्यं विरूपता। तथा च रसार्णवे—

विकृताङ्गवचोवेषैर्हास्यकारी विदूषकः। इति।

तमुदाहर्तुमाख्याति—

विदूषको यथा।

नायकः सखायं ब्रूते—

आनीय नीरजमुखीं शयनोपकण्ठ-
मुत्कण्ठितोऽस्मि कुचकञ्चुकमोचनाय।
अत्रान्तरे मुहुरकारि विदूषकेण
प्रातस्तनस्तरुणकुक्कुटकण्ठनादः ॥ १२० ॥

हे सखे! नीरजमुखीं कमलाननां प्रियां शयनोपकण्ठं तल्पान्तिकम् आनीय कपटेनानुनयेन वा आगमय्य यदाऽहं कुचकञ्चुकमोचनाय स्तनकूर्पासकापसारणाय उत्कण्ठित उत्सुकोऽस्मि। अत्रान्तरे

तन्मध्ये विदूषकेण प्रातस्तनः प्रभाते भवः तरुणकुक्कुटस्य युवताम्रचूडस्य कण्ठनादो गलध्वनिः मुहुः अकारि विदध इत्यर्थः।

कुक्कुटकूजितेन रजनीविरतिमवगत्य नायिका नानानिषेधभङ्गीर्विहाय कामाहवायैव प्रवर्ततामिति भावः। तथा च 'ताम्रचूडः कुक्कुटः' इत्यमरः।

इह कुचपदेन कञ्चुकस्य नायिकाकुचसमासक्तता, तथा तन्मोचनोत्कण्ठौचिती; कुक्कुटस्य तारुण्येन नादे सान्द्रता; नादस्य कण्ठसम्बन्धेन स्निग्धता; प्रातर्भवत्वेन रजनीविरतिसूचकता, तया नायिकाकृतक्रीडानिषेधनिवारणौचित्यम्; तादृशनादकरणेन नायकसाचिव्यं हास्यकारिता च द्योत्यते।

कुचकण्ठपदयोराधिक्यन्तु नवीनव्यङ्ग्यावगते सोढव्यम्।

कुक्कुटनादस्य विदूषकेण विधातुमशक्यतया सादृश्ये पर्यवसानान्निदर्शनोपमया संसृज्यते च ॥ १२० ॥

एतत्पीठमर्दाद्युपादानं दर्पणात्कमालाकारादिनायकशृङ्गारसहायानामपि समुपलक्षणम्।

अर्थचिन्तादिसहायास्त्वप्रकृतोपयोगितयोपेक्षिताः ॥

इति रसमञ्जरीसुरभौ नायकसहायकनिरूपणं शृङ्गारालम्बनविभावनिरूपणञ्च।

---

आलम्बनचेष्टादय उद्दीपनविभावास्तु विस्तरेण रसतरङ्गिण्यां वर्णयिष्यमाणत्वेन स्रक्सूत्रन्यायेनैवात्र वर्णिताः। अनुभावानामपि तत्सादृश्येन तेषु समासतः सात्त्विकभावान्निरूपयन् प्रामाण्याय भरतकारिकामनुवदति—

स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः।
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विकाः स्मृताः ॥

तेषां लक्षणानि रसतरङ्गिणीवर्णितानि यथा—

सत्त्वं जीवशरीरं तस्य धर्माः सात्त्विकाः। शरीरधर्मत्वे सति गतिनिरोधः स्तम्भः। वपुषि सलिलोद्गमः स्वेदः। विकारसमुत्थरोमोत्थानं रोमाञ्चः। गद्गदत्वप्रयोजकीभूतस्वरस्वभाववैजात्यं स्वरभङ्गः। भावत्वे

सति शरीरनिष्पन्दो वेपथुः । विकारप्रभवप्रकृतवर्णान्यथाभावो वैवर्ण्यम् । विकारजनितमक्षिसलिलम् अश्रु । शारीरत्वे सति चेष्टानिरोधः प्रलयः इति । विशेषस्तत एवावसेयः । तत्र तु जृम्भाऽपि नवमसात्त्विकभावत्वेन साधिता ।

ननु जृम्भातुल्यन्यायेन निश्श्वासस्यापि दशमसात्त्विकभावत्वं सिध्यतीति चेद् ? नेवम्, जृम्भानिश्श्वासयोरुपादानस्य वायुपरिपोषस्यैव नवमतया गणनया उभयोरेकत्रैव संग्रहात् । मुखाविर्भूतो वायुपरिपोषो जम्भा, नासाऽऽविर्भूतस्तु निश्श्वास इति स्वाविर्भावाधिकरणमात्रकृतो यतस्तयोर्भेदः । अत एव 'आलस्यं नयनश्रियः ( १२१ श्लो० ) इत्यत्रोभयसाधारण्यमनौज्ज्वल्यं बोधयदालस्यपदमेवोपात्तम् । अन्यथा 'जृम्भा वक्त्रसरोरुहे' इत्येवोपाददीतेति जीवनाथोपाध्यायाः ॥

संक्षेपेणैव तानेकत्रोदाहर्तुमाचष्टे—

सात्त्विकभावा यथा ।

स्फुटसात्त्विकविकारां कांचिन्निरीक्ष्य तद्विषयेऽन्यां तामेव वा सखीं पृच्छति—

भेदो वाचि, दृशोर्जलं, कुचतटे स्वेदः, प्रकम्पोऽधरे,
पाण्डुर्गण्डतटी, वपुः पुलकितं, लीनं मनस्तिष्ठति ।
आलस्यं नयनश्रियश्चरणयोः स्तम्भः समुज्जृम्भते,
तत्किं 'राजपथे' निजामधरणीपालोऽयमालोकितः ॥१२१॥

हे सखि ! अस्यास्तव वा यतः वाचि भेदो वैजात्यं स्वरभङ्गः, दृशोः जलम् अश्रु, कुचतटे स्वेदो घर्मः, अधरे प्रकम्पः, गण्डतटी कपोलस्थली पाण्डुः पीता, वपुः पुलकितं सरोमाञ्चम् , मनः लीनमन्तर्हितं शून्यं तिष्ठति । तथा नयनश्रियो नेत्रच्छवेः आलस्यं स्तैमित्यम् , चरणयोः स्तम्भो गतिरोधः समुज्जृम्भते समुल्लसति । तस्मादनया त्वया वा राजपथे प्रधानमार्गे अयं विदितसौन्दर्यः निजामनामकधरणीपालो देवगिरिनरेशः आलोकितः किम् , साक्षात्कृतः किमु ? इत्यर्थः ।

नहि तादृशसुन्दरदर्शनमन्तरेण सहैव सर्वे सात्त्विकविकारा उल्लसेयुरिति तात्पर्यम् ।

इह स्वरभङ्गा-ऽश्रु-स्वेद-कम्प-वैवर्ण्य-रोमाञ्च-प्रलय-जृम्भा-स्तम्भाः स्फुटा एव । अधरकम्पेन चुम्बनस्पृहा; गण्डपाण्डिम्ना विरहकदनम्; मनोलीनतया तदेकतानत्वं बाह्यमेयवैमुख्यं राजविषयकरतिश्च प्रतीयते ।

लोचनालस्येन प्रलय एव सूच्यत इति केचित्, तन्न, प्रलयस्यान्यलभ्यत्वादस्य जृम्भासूचकत्वाच्च ।

स्वरभङ्गादिभिर्निजग्रामराजदर्शनसम्भावनादनुमानालङ्कारश्च ॥१२१॥

अतः परं व्यभिचारिभावानामविनाभावेन वर्णितप्रायत्वाद्रसतरङ्गिण्यां वर्णयिष्यमाणत्वाच्च पृथक् निरूपणमकृत्वा शृङ्गारं लक्षयति—

रतिस्थायिभावः शृङ्गारः ।

रतिः स्थायी भावो यस्येति बहुव्रीहिः । रतिस्तु अङ्कुरणाद्यवस्थाचतुष्टयेन भूमिकासप्तकेन च नवनवाभिधाना यूनोरन्योन्यालम्बना चित्तवृत्तिः । तस्या आशु विनाशित्वेऽपि वासनात्मकत्वान्मुहुरभिव्यक्तेः स्थायितेति जगन्नाथः ।

शृङ्गं मन्मथोद्भेदम् ऋच्छतीति शृङ्गारः । तदुक्तम्—

इयमङ्कुरिता प्रेम्णा मानात्पल्लविता भवेत् ।
सत्कोरका प्रणयतः स्नेहात्कुसुमिता भवेत् ॥

इति भावप्रकाशिकायाम् ।

प्रेमा दिदृक्षा रम्येषु, तच्चिन्ता त्वभिलाषकः ।
रागस्तत्सङ्गबुद्धिः स्यात् स्नेहस्तत्प्रवणक्रिया ॥
तद्वियोगासहं प्रेम रतिस्तत्सहवर्तनम् ।
शृङ्गारस्तत्समः क्रीडासंयोगः सप्तधा क्रमात् ॥

इति रसाकरे ।

विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः ।
नीता सदस्यरस्यत्वं रतिः शृङ्गार उच्यते ॥

इति रसार्णवे च । तं विभजते—

स च द्विविधः—सम्भोगो विप्रलम्भश्च ।

स शृङ्गारः। संयोगकालावच्छिन्नरत्यवच्छिन्नचित्त्वं वियोगकालावच्छिन्नरत्यवच्छिन्नचित्त्वं च क्रमेण तयोर्लक्षणम्। संयोगश्च न दम्पत्योः सामानाधिकरण्यम्, एकतल्पशयनेऽपीर्ष्यादिसद्भावे विप्रलम्भस्यैव वर्णनात्। वियोगोऽप्येवं न वैयधिकरण्यम्, दोषस्योक्तत्वात्। तस्माद् द्वाविमौ संयोगवियोगाख्यावन्तःकरणवृत्तिविशेषौ। यत्संयुक्तो वियुक्तश्चास्मीति धीः इति जगन्नाथः। इह यद्यपि कृष्णकविना—

सम्भोगः स्याच्चुम्बनादिभेदाद् यद्यप्यनेकधा।
तथापि कामिनीकान्ताऽऽरब्धभेदाद् द्विधा मतः॥

इति सम्भोगस्य द्वैविध्यमास्थितम्। शिङ्गभूपेन तु 'स सम्भोगश्चतुर्विधः, संक्षिप्तः, सङ्कीर्णः, सम्पन्नतरः, समृद्धिमानिति ते' इति चातुर्विध्यमुदितम्। तथाप्यानन्त्याद्विभ्यतामानन्दवर्धनादीनां सम्मत्यैकविधत्वमेवेष्टम्। एवं विप्रलम्भोऽपि मम्मटादिभिरभिलाषविरहेर्ष्याप्रवासशापहेतुकत्वात्पञ्चविध उक्तः। विश्वनाथादिभिः पुनः पूर्वरागमानप्रवासकरुणात्मकत्वाच्चतुर्विध उपन्यस्तः। धनञ्जयेन त्वयोगविप्रयोगेति द्विविध एवाङ्गीकृतः। जगन्नाथेन खलु भेदकानां प्रवासाद्युपाधीनां विशेषानुपलम्भादेकविध एव गणित इति दिक्।

तत्र सम्भोगमुदाहर्तुमारभते—

सम्भोगो यथा।

कस्याश्चित्पुरुषायितं काऽपि कथयति—

वियति विलोलति जलदः
स्खलति विधुश्चलति कूजति कपोतः।
निष्पतति तारकातति-
रान्दोलति वीचिरमरवाहिन्याः॥ १२२॥

वियत्याकाशे पृष्ठदेशेऽवलग्ने वा जलदो मेघः कचकलापः विलोलति तरलीभवति। तथा विधुरिन्दुः आननं चलति चेष्टते, तथा स्खलति क्रियासु सङ्कुचति। यद्वा, जलद एव स्खलति पृष्ठानुसृतो भवति। तथा कपोतः कलरवकण्ठः कूजति रौति। तथा तारकाततिरुडुश्रेणी मुक्तावली पुष्पसंहतिर्वा निश्शेषेण पतति। तथा अमरवाहिन्या मन्दा-

किन्याः वीचिरूर्मिः त्रिवली मुक्तावली वा आन्दोलति मुहुरावर्तत इत्यर्थः।

उद्धतं पुरुषायितमाचरतीति तात्पर्यम्।

अत्र जलदादिपदानां व्यङ्ग्यविशेषावगमाय कचकलापादौ साध्यवसाना लक्षणाः। कचकलापस्य जलदत्वाध्यासो नीलत्व-सन्तापापनोदकत्व-स्वेदजलवत्त्वानि, तानि वियद्विलोलनेन मिलित्वा विपरीतरतोद्धत्यम्; आननस्य विधुत्वाध्यासः सुधापूर्णत्व;हासज्योत्स्नाभृत्त्वे; चलनं तु चुम्बनौत्सुक्यम्; सङ्कोचः स्वहेतुं त्रपाऽभिनयमानन्दं वा; कण्ठस्य कपोतत्वाध्यासो मणितमाधुरीम्; मुक्ततेस्तारकासंहतित्वाध्यास उज्ज्वलताम्; मुक्ततेः पातो हारच्छेदम्, स च रतसंरम्भाधिक्यम्; त्रिवल्या मन्दाकिनीत्वाध्यास ऊर्ध्वस्थितितापहारित्वश्रमस्वेदसलिलपूर्णत्वाऽऽयतत्वानि; सर्वं पुनः प्राग्वत्पुरुषायितविशेषमवगमयति। अतिशयोक्तिरलङ्कारः। गीतिच्छन्दश्च॥ १२२॥

विप्रलम्भमुदाहर्तुमाचष्टे—

विप्रलम्भो यथा।

काऽपि नायकं नायिकावियोगवैक्लव्यं निवेदयति—

प्रादुर्भूते नवजलधरे त्वत्पथं द्रष्टुकामाः
प्राणाः पङ्केरुहदलदृशः कण्ठदेशं प्रयान्ति।
अन्यत् किं वा तव मुखविधुं द्रष्टुमुड्डीय गन्तुं
वक्षः पक्षं सृजति बिसिनीपल्लवस्य च्छलेन॥ १२३॥

नवजलधरे नूतनघने प्रादुर्भूते प्रकटिते सति त्वत्पथं त्वन्मार्गं द्रष्टुकामा दिदृक्षव इव पङ्केरुहदलदृशः सरसिजच्छदेक्षणायाः मत्सख्याः प्राणा असवः कण्ठदेशं प्रयान्ति प्रतिष्ठन्ते। अन्यदितो भिन्नं वा किं ब्रवीमि तव मुखविधुं वक्त्रेन्दुं द्रष्टुमीक्षितुम्, अत एव उड्डीयोत्पत्य गन्तुं तस्याः वक्षो हृदयं बिसिनीपल्लवस्य तापापनोदार्थं गृहीतस्य नलिनीकिसलयस्यच्छलेन पक्षं गरुतं सृजति इव इत्यर्थः।

त्वद्वियोगवेदनयाऽऽसन्नमरणा त्वदेकशरणा सा शीघ्रमनुकम्प्यतामित्याशयः।

